# 'वेदान्तसारस्य विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्'




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच०डी०)
इत्युपाधये प्रस्तुतोऽयं
**शोध-प्रबन्धः**

२०१०

निर्देशकः

प्रो० सुधाकरमिश्रः

आचार्यो वल्लभवेदान्तस्य
वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी

गवेषकः

रणजीततिवारी

पंजी०सं० : ३६७६/५२७७
दिनाङ्क : २३-११-२००५

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-221002




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

विद्यावारिधिः (पी-एच०डी०) इत्युपाधये प्रस्तुतोऽयं

# शोधप्रबन्धः

# 'वेदान्तसारस्य विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्'



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच०डी०)
इत्युपाधये प्रस्तुतोऽयं
**शोध-प्रबन्धः**

२०१०


**निर्देशकः**

**प्रो० सुधाकरमिश्रः**
आचार्यो वल्लभवेदान्तस्य
वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी

**गवेषकः**

**रणजीततिवारी**
पंजी०सं० : ३६७६/५२७७
दिनाङ्क : २३-११-२००५



**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,**
**वाराणसी-221002**

# 'वेदान्तसारस्य विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्'



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच०डी०)
इत्युपाधये प्रस्तुतोऽयं
**शोध-प्रबन्धः**

२०१०


निर्देशकः

प्रो० सुधाकरमिश्रः
आचार्यो वल्लभवेदान्तस्य
वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी

गवेषकः

रणजीततिवारी
पंजी०सं० : ३६७६/५२७७
दिनाङ्क : २३-११-२००५


सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-221002

# निर्देशकस्य प्रमाणपत्रम्

आयुष्मता श्रीमता श्री **रणजीततिवारी** गवेषकेण शाङ्करवेदान्ताचार्येण मत्तोऽमत्तश्चाधीत्य मन्निर्देशने **''वेदान्तसारस्य विद्वन्मनोरञ्जनी-टीकायाः समीक्षणम्''** इति शीर्षकमवलम्ब्य महता श्रमेण शोधप्रबन्धः समुपस्थापितः । तमिमं शोधप्रबन्धं विषयानुसारि तत्सम्बद्धविषयविवेचनपूर्णं 'विद्यावारिधिः' इत्युपाध्यर्थं परीक्षणार्थमग्रेसारयामि ।

संस्तुतिपूर्वकमग्रेसारयति
जे.प्र. त्रिपाठी
31-10-10

अध्यक्ष
वेदान्त विभाग
सं० सं० वि० वि०, वाराणसी

**निर्देशकः**
सुधाकरमिश्रः
२८।१०।१०
**प्रो० सुधाकरमिश्रः**
आचार्यो-वल्लभवेदान्तस्य,
वेदान्तविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी ।

# प्रतिज्ञप्तिः

अहं प्रतिजाने यत् ''**वेदान्तसारस्य विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्**'' इत्याख्यः शोधप्रबन्धो मया वेदान्तविभागे वल्लभवेदान्तस्य 'आचार्य' **प्रो० सुधाकरमिश्रमहोदयानां** निर्देशने यथानियमं निष्पादितः। इतः पूर्वं शोधप्रबन्धस्यास्य कुत्राप्यंशतः पूर्णतो वा केनापि प्रस्तुतिर्न विहिता। मदीयं शोधकार्यं सर्वथा मौलिकमस्ति।

*अनुसन्धाता*
रणजीततिवारी
27-10-2010
**रणजीततिवारी**



# भूमिका

"श्रीगुरुचरणारविन्दाभ्यां नमः"

प्रायशः ग्रन्थादौ "भूमिकायाः" लेखनं बाहुल्येनोपलभ्यते। तच्च क्वचिदत्र प्राक्कथनमिति।

भूमिरेव भूमिका। भूमिर्यथा सर्वस्य वस्तुनो भारवहनसमर्था आधारस्वरूपा भवति तथैव कस्यचित्लेखस्य ग्रन्थस्य शोधप्रबन्धस्य च प्रतिपाद्यविषयस्य भूमिका द्योतिका भवति। तेन सूक्ष्मरूपेण प्रोक्तेन सर्वोऽपि विषयो बुद्धिविषयतामालम्बते। अतो विषयावतारणानुकूलो व्यापारः शब्दात्मको भूमिका नामेति निर्दृष्टो भवति परिष्कारः। अत एव सर्वे शास्त्रकारा ग्रन्थकारा शोधप्रबन्धलेखका किं बहुना धर्मस्य वक्तारो राजनीतेवा वक्तारः प्रथमं वक्तव्यस्य भूमिकां लिखन्ति श्रावयन्ति च। अतएव यो भूमिकानुरूपं प्रतिपाद्यं प्रतिज्ञातं वा न करोति तद्विषये प्रोच्यते लोके अयं केवलं भूमिकामेव रचयति। तस्य संस्कृतम् — 'बहुभूमिकावाचः' इति। अत एव समीचीनस्य प्रियस्य असमीचीनस्याप्रियस्य वा प्रतिपाद्यस्य विषयस्य ज्ञानं लोके भूमिकात एव भवति इदमेव कारणं वर्तते यन्मङ्गलाचरणे एवानुबन्ध चतुष्टयस्य सूचना ग्रन्थकृता अवश्यं कर्तव्येति कथा प्रथाप्रथिता।

विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम्। अनुबन्धं विना ग्रन्थे

मङ्गलं नैव शस्यते इति। अनुबन्धत्वञ्च ग्रन्थाध्ययनप्रवृत्तिप्रयोजक-जिज्ञासाविषयत्वम्।

वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च। अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वन्तासिद्धेर्न ते — पृथगालोचनीयाः तत्रानुबन्धो — नामाधिकारीविषयसम्बन्धप्रयोजनानि। अधिकारी तु विधिवदधीत वेदवेदागंत्वेनापाततोऽधिगताखिलवेदार्थो अस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिक प्रायश्चित्तो-पासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधन-चतुष्टयसम्पन्नः प्रमाता। काम्यानि — स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि। निषिद्धानि — नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्याबन्दनादीनि नैमित्तकानि — पुत्रजन्माद्यनुबन्धीनि जातेष्टयादीनि। प्रायश्चित्तानि — पापक्षयसाधनानि चान्द्रायणादीनि उपासनानि सगुणब्रह्मविषयमानस व्यापाररूपाणि शाण्डिल्यविद्यादीनि। एतेषां नित्यादीनां बुद्धिशुद्धिः परमं प्रयोजनं।

उपासनानां तु चित्तैकागयं तमेतमात्मनं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन, इत्यादिश्रुतेः तपसा कल्मषं हन्ति इत्यादिस्मृतेश्च। नित्यनैमित्तिक प्रायश्चितोपासनानां त्ववान्तरफलं पितृलोकसत्यलोक प्राप्तिः "कर्मणा पितृलोको विद्यया देवलोको" इत्यादिश्रुतेः। साधनानि — नित्यानित्यवस्तुविवेकेहामुत्रार्थफ़लभोग विरागशमादिषट्क सम्पति मुमुक्षुत्वानि।

नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलम नित्यमिति विवेचनम्।

ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानां, कर्मजन्यतयाऽ-नित्यत्ववदामुष्मिकाणामप्यमृतादि विषयभोगानामनित्यतया तेभ्योनितरां विरतिरिहामुत्रार्थफलभोगविरागः। शमादयस्तु — शमदमोपरतितितिक्षा समाधान श्रद्धाख्याः शमस्तावक्छ्रवणादिव्यतिरिक्त विषयेभ्यो मनसो-निग्रहः दमोब्राह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो विहितानां कर्मणांविधिना परित्यागः।

तितिक्षा — शीतोष्णादिद्वन्द्वसहिष्णुता।

निगृहीतस्य मनस श्रवणादौ तदनुगुणविषये च समाधि समाधानं गुरुपदिष्ट वेदान्तवाक्येषु विश्वासः श्रद्धा। मुमुक्षत्वं मोक्षेच्छा एवम्भूतः प्रमाताधिकारी शान्तोदान्तः इत्यादिश्रुतेः।

उक्तञ्च —

**प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षव।।**

विषयो — जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात्। सम्बन्धस्तु — तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः। प्रयोजनं तु तदैक्य प्रमेयगताज्ञाननिवृत्तिः स्वस्व-रूपानन्दावाप्तिश्च "तरति शोकमात्मवित्" इत्यादिश्रुतेः ब्रह्मविद्ब्रह्मैव भवति इत्यादिश्रुतेश्च। अयमधिकारी जननमरणादिसंसारानलसन्तप्तो प्रदीप्त-शिरा जलराशिमिवोपहारपाणिश्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति, समित्पाणिः, श्रोत्रियं ब्रह्मनिष्ठं इत्यादिश्रुतेः। स परमकृपयाध्यारोपाप-वादन्यायेनैनमुपदिशति स्तमै स विद्वानुपसन्नाय प्राह इत्यादिश्रुतेः।

अस्या वेदान्त विद्यायाः स एवाधिकारी यः साधनचतुष्टय सम्पन्नः तदनन्तरं मूलाज्ञानवृत्तिपूर्वकं परमानन्दप्राप्त्यर्थम् अध्यारोपापवाद न्यायनैतदखिलप्रपञ्चस्याविद्यात्वञ्च प्रदर्शितम् ततस्तदविद्याविनाशन साधनभूतानि श्रवणमननादीनि सविस्तरं विवेचितानि, तदनन्तरं तत्व- मसीत्यादिवाक्योपदेश श्रवणेन ब्रह्मजीवयोरैक्यज्ञानपूर्वकं निरस्तसमस्त भेदबुद्धेरधिकारिणो जीवन् मुक्तदशा वर्णिता ।

एतावदेवालमित्यमनल्पेनेति धिया ग्रन्थमुपजिहीर्षुर्ग्रन्थकार आह जीवनमुक्तो जनो जीवन्मुक्तदशायां निरस्त समस्त भेदभावप्रतीति स्वयं प्रकाशात्मानन्दमनुभवन् ब्रह्मभूत एवावतिष्ठते ।

ते पदार्थाः — शुद्धचित्, ईश्वर, जीव, माया, अविद्या, जगत् इत्यादयः । न जाग्रेन्नये स्वप्नको वा सुषुप्तिं न विश्वो न वा तेजसः ।

इदमेव सर्वं परस्परमन्यार्थकं वेदान्तभाष्यादि व्याख्नोप- व्याख्यानादिकमधीत्य मम मनसि जातं वेदान्तमतानुसारेणात्मनः किं स्वरूपम् जीवात्मा अणुः, व्यापको वा। जीवात्मनोरभेदः भेदो वा। वेदस्य स्वतः प्रामाण्यं परतो वेति विविधं विषयं विचारणीयं विचार्यनुसन्धातुमहं प्रवृत्तः । सूत्ररूपेणात्त भूमिकायां निर्दिष्टा विषयाविस्तरेण शोधप्रबन्धे प्रतिपादिताः सन्ति विशेषस्त्वत्रानवसरप्रोक्तः स्यात् ।

इदं तु सर्वसर्वे विज्ञा जानन्त्येन यद् ज्ञानमनन्तमपारं विज्ञेय- मल्पमिति । अतएव सूक्तम् —

"अत्यन्ता सत्यपि ह्यर्थे शब्दो ज्ञानं करोति हि । इति तथा च ज्ञानस्याधिकयं ज्ञेयस्याल्पत्वं सुतरां सिद्ध्यति । अतो मया यज्ज्ञातं यदनुभूतं

यच्च वेदान्ताध्ययनाध्यापनतोऽन्यवेदान्ताध्यापनतोऽनुभवतो युक्तितो गुरुक्तेश्च प्रतिभातं तत्सर्वंलिखितम् । तस्य समीचीनासमीचीनत्वं प्रमाणानि तु विद्वांसश्छात्राविमर्शकाश्च । ज्ञानानन्त्याज्ज्ञेयाल्पत्वाच्च किञ्चिदनुपपन्नमपि ज्ञेयं प्रतिपादितं स्यातर्हि करणापाटवादिदोषस्य केवलान्वयित्वान्ममैव दोषं मत्वा तत्र न ध्यानं दद्युः कृपालवः पाठका इति क्षमां याचामि ।



# कृतज्ञता-ज्ञापनम्

**भगवन्तौ उमामहेश्वरौ यद् पुण्यस्थल्यां भगवतिकाश्यामन्**

अकारणकरुणावरुणालयस्याशरणशरणस्य सृष्टिस्थितिसंहार-कारणभूतस्य काश्यां साक्षाद्विराजितस्य। निरालम्बावलम्बस्य साम्ब-सदाशिवस्य बाबाविश्वनाथस्य पादपङ्कजेषु सततं नमामि। येषां कृपाबलेनैव शोधप्रबन्धोऽयं पूर्णतामगात्।

सर्वप्रथमं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विद्वत्परिषद् मण्डलमण्डिता समस्तदिङ्मण्डलाखण्डप्रचण्डाः परमदार्शनिकाः परमतविद्रावणाः सदाध्ययनाध्यापने तत्परशीलाः तपः स्वाध्यायपूताः। सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदान्तविभागे वल्लभवेदान्तस्याचार्याः विश्वविश्रुतानां शिवसायुज्याप्तानां विद्वन्मूर्धन्यानां **प्रो० डॉ० श्रीदेवस्वरूप-मिश्राणामात्मजाः प्रो०डॉ० श्रीसुधाकरमिश्राः श्रद्धेयाः गुरवः सादरं** प्रणम्यन्ते।

तदनुसम्प्रति सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य परमादरणीयाः उदारचरिताः दर्शन संकायाध्यक्षाः **प्रो० रामकिशोरत्रिपाठी** महाशयानां चरणौ प्रणमामि।

ततः वेदान्तविभागीयाः वेदान्तविभागाध्यक्षाः आचार्याः **प्रो० डॉ० जयप्रकाशनारायणत्रिपाठी, डॉ० शम्भुनाथशुक्लः,**

**पं० शशिशेखरनाथ पाण्डेय,** प्रभृतयः गुरवः सादरमभिनन्द्यन्ते।

साम्प्रतं सम्पूर्णानन्द संस्कृतविश्वविद्यालये कुलपतिपदमलङ्कुर्वतां श्रीमतां **डॉ० वी०कुटुम्बशास्त्री** महोदयानां कार्यकाले स्वकीयं शोधप्रबन्धं प्रस्तुतीकुर्वतामस्माकं चेत् आनन्दसुधानिधौ निमग्नम् जातमतस्तेषां पदपाथोजेषु कोटिनतिं समर्प्यानन्दमनुभवामो वयम्।

पूज्यनीया देवीस्वरूपा नवनीतचित्ता ममतापारायणो माता **श्रीमती सुरजादेवी** महोदयाः श्रद्धापूर्वकेण प्रणम्यन्ते यतो हि मातृऋणाद्-मुक्तिर्न भवत्याजीवनम्। परमादरणीयाः परमपूज्याः प्रातः स्मरणीयाः पितृचरणाः **श्रीवंशनारायणतिवारी** महाशयाः सादरं सश्रद्धं च अहर्निशं प्रणम्यन्ते, स्वज्येष्ठभ्रातृवर्याणां **श्रीगोपालजीतिवारी, श्रीघनश्यामतिवारी, श्रीइन्द्रजीततिवारी** महोदयानां चरणेषु प्रणामाञ्जलयः विलसन्तु, ये सर्वदा महोत्साहवर्धनाय तत्पराः भवन्ति। इतः परं भारतीयसंस्कृता-नुसारिणी परमसहयोगिनीं स्वार्धाङ्गिनीं श्रीमती सन्ध्यादेवीं प्रति धन्यवादं ज्ञापयामि।

मम शोधप्रबन्धलेखनक्रमे परमसहयोगाय **डॉ० अरुणकुमार पाण्डेयः, डॉ० राजारामशुक्ल, डॉ० रमाकान्ततिवारी, डॉ० राजेन्द्र प्रसाद उपाध्यायः, पुष्पराजसिंहः** सादरमभिनन्द्यन्ते।



''वेदान्तसारस्य विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्''

## विषयाऽनुक्रमणिका

# प्रथमोऽध्यायः

## वेदान्ततत्वनिरूपणम्

**वेदान्तस्वरूपविचारः –**

शाङ्करवेदान्तगतोपासना विचारप्रसङ्गेऽवसरसङ्गत्या वेदस्वरूप-निरूपणं प्रासङ्गिकम् एवं प्रसङ्ग उपोद्घातश्च सङ्गतिः प्राप्तं भवति, नन्वत्र कथमुपोद्घातः सङ्गतिः यत्श्चिन्तां प्रवृत्तद्धिार्त्थमुपाद्यातं बिदुर्बुधा इत्युक्तेः प्रवृत्तोपपादक विषयिण्या जिज्ञासाया एवोपद्घात सङ्गतित्वे तस्य अनन्तरा-भिधान प्रयोजकजिज्ञासा जनक ज्ञान विषयत्वरूप सङ्गति सामान्य लक्षणा-नाक्रान्ततया कथं सङ्गतित्वमिति चैन्न अनन्तराभिधान प्रयोजक जिज्ञासाजनक स्मरणप्रयोजकनिरूप्यनिष्ठ सम्बन्धस्यैव सङ्गतित्वान्, तथा च शाङ्करवेदान्ता-भिधानप्रयोजकीभूता या शाङ्करवेदान्त इत्यादि वाक्य प्रतिपाद्या वेदान्त घटक वेदस्वरूप ज्ञानेच्छा तज्जनकस्य वेदस्मरणस्य प्रयोजकौ यः सम्बन्धः प्रवृत्तोप-पादकत्वरूपस्तस्यैव सङ्गतित्वसंभवात्, उपपाद कत्व चात्र ज्ञापकत्वम्। स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग, तथा च शाङ्करवेदान्तेत्यादिवाक्यघटकस्य शङ्करस्य निरूपणोत्तरं वेदशब्दार्थ निरूपणजिज्ञासा स्वाभाविकोति तस्य उपेक्षानर्हत्वम्। अवसरश्च प्रतिबन्धकीभूत शिष्यजिज्ञासानिवृत्ता वनन्तरवक्तव्यत्वं, एव च शाङ्करेत्यादि वाक्यघटक शङ्करपदनिरूपणेन शिष्य जिज्ञासा निवतितेति तदनन्तरं

वेदशब्दार्थनिरूपणमवसरप्राप्तम्, तथा च शाङ्करवेदान्त उपासनेत्यादि वाक्ये शङ्कर शब्दनिरूपणानन्तरं वेदस्वरूपनिरूपणे सङ्गतित्रयम्, प्रसङ्गः, उपोदघातः अवसरश्चेति।[१]

**शब्दार्थशक्तिविचारः –**

एवञ्च वेदान्तघटकवेदस्वरूपज्ञानमेव प्रथममपेक्षितम्, वाक्य-घटक यावत्पदार्थानां ज्ञानाभावे वाक्यार्थज्ञानस्यैवानिष्पत्ते स्तो वेदशब्दो व्युत्पादनीयः, व्युत्पतिश्च विशेषेणोत्पत्तिः, सा च शास्त्रजन्यशब्दार्थज्ञानादि-सम्पाद्य संस्कारभेदरूपा शब्दानामर्थावबोधकशक्ति वा शाब्दबोधप्रयोजिका 'सङ्केतोलक्षणाचार्थे पदवृत्तिरिति।'[२] 'एकपदार्थेऽपरपदार्थस्य[३] संसर्गः संसर्ग-मर्यादया भासते इतिचोल्लेखात्, आकाङ्क्षाप्रयोज्य संसर्गोव्युत्पत्तिरिति निष्पद्यते। स च सम्बन्धो द्विधाभासते, अभेदरूपेण भेदरूपेणचेति – "स च क्वचिदमेदः क्वचिच्च तदतिरिक्त एवाधारधियप्रतियोग्यनुयोगि विषयविषयि-भावादिरिति।[४] ग्रन्थ कृदुक्तरित्यन्यदेतत्। एवं हि वेदशब्दः कीदृगर्थस्य वाचकः, तस्य वाच्योऽर्थः कः कथञ्च तस्मिन्नर्थे तस्य शब्दस्य सम्बन्ध इति निरूपण-मपरिहार्य मतस्तदनुरुध्य वेदशब्दार्थनिर्वचनम्। यद्यपि शब्दार्थयोः शक्ति ग्राहकमस्तिसाधनबहुत्वं तच्च —

---

१. अनुमान चिन्तामणिना प्रत्यक्षोपजीवकत्वादित्यादि चिन्तामणि व्याख्यानं, दीधितो गदाधर्या च पञ्चलक्षणम्, माधुर्याव्याप्तेरनुमानप्रामाण्योपपादकत्वेत्यादि माधुर्यां मनोरमाटीकायाम्, अनुमान खण्डारमे मुक्तावल्या रामरुद्रीये च।

२. शक्तिवादः, पृ० १.

३. व्युत्पत्तिवादः, पृ० १.

४. तदेव, पृ० २.

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**

**वाक्यस्य शेषद् विवृतेर्वदन्ति सन्निध्यतः सिद्धपदस्य वृद्धाः ।।** [१]

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद् भवति, सादृश्य ज्ञानेन च शक्तिग्रह उपमानाद् स च यथागोस्तथागवय इत्युक्ते गवये गौसादृश्यं निश्चिनोति गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति इति कौशादपि शक्तिग्रहः, सतिबाधके क्वचितस्यापवादः, आप्तवाक्यादपि यथा कौकिलः पिकशब्द वाच्य इत्यादि शब्दात् कोकिले पिकशब्दानां शक्तिग्रहः, व्यवहाराच्च यथा प्रयोजक वृद्धेन घटमानयेत्युक्ते घटमानयति घटं नय गां बधनित्युक्ते प्रयोज्य वृद्धस्तथा करोति, तथाचेषां शब्दानामुच्चारणीतर घटानयनादिरूपं कार्यं पार्श्वस्थोबालो घटादि शब्दानां घटादि विशेषेशक्तिमवधारयति । वाक्यशेषादपि शक्तिग्रहः, यवमयश्चरुर्भवतीत्युक्ते यव शब्दस्य प्रयोगोदीर्घशूकविशेषे आर्याणां कङ्गौ तु म्लेच्छानाम् यदान्या औषधयीम्लायन्ते, अथैतेमोदमानास्तिष्ठन्तीति वाक्य शेषाद् यवपदस्य दीर्घशूकविशेषे शक्ति निर्णीयते, कङ्गौ तु म्लेच्छानां शक्तिभ्रमात्प्रयोगः इति ।

एवं स्थिते प्रथमतो व्याकरणमनुसृत्येव वेदशब्दार्थनिर्वचनं युक्तं प्रतीयतेयश्च व्याकुरुते वाक्यम् ।[२]

**"आपः पवित्रं परमं [३]पृथिव्या अद्भयः पवित्रं परमं हि मन्त्राः ।**

**तेषा च सामर्ग्यजुषां पवित्रं महर्षयी व्याकरणं निरादुः ।।"**

---

१. मुक्तावली श० प्रारम्भे ।
२. महाभाष्य १२-३२२/२.
३. न्याय०म०प्र०प्र०, पृ० ३९२.

एवं —

**''रूपान्तरेण देवास्ते विहरन्ति महीतले ।**

**ये व्याकरणं संस्कारपवित्रितमुखा नराः ।।''**

इत्यादि व्याकरण माहात्म्य सूचकानामनन्तप्रमाणानां सत्वात् तच्च यथा – वेद शब्दनिष्पतिश्चतुर्भ्यो धातुभ्यः विद ज्ञाने, विद विचारणे, विद्ल्ललाभे, विद सत्तायाम् इति तत्र घ प्रत्यये वेद इति, तेन हि ज्ञानं सता लाभश्चेति त्रयोऽप्यर्थाः सिद्ध्यत्ति। जीवनरूपास्थितिरपि लाभ शब्दार्थः, शता शब्द उत्पतेर्वाचकः, तेन च विद धात्वर्थ उत्पत्तिस्थितिश्चोभयं भवत्येव, घ प्रत्यायार्थश्च ज्ञानादिकम्, तस्य भावे अकर्तरि कारके विधीयमानत्वात्, अतो ज्ञानम्, ज्ञानसाधनम्, ज्ञानकर्म, ज्ञानाधिकरणम्, सत्ता, सत्तासाधनम्, सताकर्म, सताधिकरणम्, स्थितिः, स्थितिसाधनम्, स्थितिकर्म, स्थित्यधिकरणचेत्यादि-सर्ववेदशब्दार्थत्वेन व्याख्यातव्यं भवति अतः किमस्ति तत्त्वं वेदशब्दार्थ बहिर्भूतम् ? अद्यत्वेतु ग्रन्थात्मके वेदे शाब्दज्ञानसाधनत्वरूपं लक्षणं समन्वाययन्ति प्रायेणं विपश्चितः, वस्तुतोनिगूढावृतस्फोरणाभिप्रायेण वेद शब्दार्थे परिशोलिते तु सर्वविधज्ञानसाधनत्वम्, ज्ञानरूपत्वम्, सतासाधनत्वम्, सतारूपत्वम्, स्थितिसाधनत्वम्, स्थितिरूपत्वञ्चेत्यादयोऽप्यर्था वेदशब्दार्थ समन्विता भवन्त्येव। एवं हि सर्वस्य कारणभूतं स्वरूपभूतं च वस्तु वेद इति एवं शक्तिग्राहकान्तरेषु यथायथमुपपादनीयमिति विरम्यते।

**वेदानामनन्तत्वम् –**

ननु कथमिदं संभवति? यतः सर्वे सर्वार्थ वाचका इति

कामदोग्धृत्वाच्छब्दानां व्याकरणकाव्यकोषादिबलेनान्यार्थस्यापि संभवाद् वेद शब्दस्य पूर्वोक्तनिकार्थत्वं संभवतीति विभाव्यते तदेदमुत्तरम् योगाद्रूढेर्बलीयस्त्वादिति न्यायादत्र योगरूढार्थ स्वीकार एव युक्तः वेदानामनेकार्थत्व कल्पनं तु विनोदमात्रं, प्रसङ्गानुसारसार्धस्तित्वं प्रतिभाति एको वेदशब्द[१] आद्युदात्तः शब्दराशिर्बोधक अपरस्तु वेदशब्द अन्त्योदातः कुशमुष्ट्योर्बोधको वेदं कृत्वा वेदिं करोतीत्यत्र, एतदभिप्रायेणैव पाणिनिना ऋष्यादिगणे उछादिगतेचोभयत्र पठितः, अतएव मन्त्र[२] ब्राह्मणयो वेद नामधेयम् इति वचमान्मन्त्रब्राह्मणात्मक-शब्दराशविध मुख्यो वेदशब्दप्रयोगः, आर्य जातिः सर्वस्वमपि स एव, पूर्वोक्तानामर्थानां साधनसाधनमपि शब्दराश्यात्मक एव वेद अतः पूर्वोक्तयुक्त्या वेदशब्दार्थकरणमयुक्तम्, एवं भरद्वाजो[३] हं त्रिभिरायुर्भिब्रह्मचर्यमुवाच। तं ह जीर्ण स्थविरं शयानमिन्द्र उपव्रज्यो वाच – भरद्वाज यते चतुर्थमायुर्दधां किमेतेन कुर्या इति। ब्रह्मचर्यवेतेन चरियमिति होवाच ! तं ह त्रीन् गिरिरूपान् विज्ञातानिव दर्शया चकार। तेषां हेकैकस्यान्मुष्टिमाददे। स हो वाच भरद्वाजे त्यामन्त्र्य – वेदा वा एते। अनन्ता वै वेदाः। एतद् वा एतैस्त्रिभिरायुर्भिरन्व-वोधया "इति प्रतिपादितं वेदानां मनवत्वं, न हि सन्ति साम्प्रतमुपलभ्यमाना वेदा अनन्ताः, तस्मा तत्त्वान्तरमेवास्ति वेदपदप्रतिपाद्यमस्ति यदनन्तमिति" चेत्।

न 'भरद्वाजीह' इत्यादि समुद्धृत वचन विरोधात् ज्ञान प्रतिपादक

---

१. का०श्रौ०भू०, पृ० ४-५.
२. आप० ३१.
३. तै०ब्रा० ३-१०/११-१२.

शब्दराश्यात्मकवेदाध्ययनार्थमेव ब्रह्मचर्यविधि ग्रहण प्रसिद्धिभ्याम्, यथा —

'वेदानधीत्यवेदो[१] वा वेदं वापि यथाक्रम्। अविप्लुतब्रह्मचर्यः'

इति।

छान्दोग्येहि इन्द्रप्रजापतिसंवादे इन्द्रत्वादपि विद्यागुरुतरेति एवं किलेतदिन्द्रत्वादपिगुरुतरमिन्द्रणापिमहतायत्नेनेकीतरवर्षशतकृताभ्यासेन प्राप्तमात्मज्ञान मतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तोति इति हिं प्रसिद्धिः, अपिच अन्ववोचथा इत्युनुवचनस्य शब्दराश्यत्मकवेद ग्रहणं एव संभवात् तद्भिन्नस्यानुवचनासंभावात्। अस्मदादि मनुष्य ग्राह्यस्य वेदस्यानन्त-त्वासंभवेऽपि देवऋष्यादि ग्राह्यस्य वेदस्यानन्तत्वे बाधकाभावात्, अधत्वे तु मानव बुद्धिग्राह्याणां वेदानां सत्स्राधिकशाखानां विपरिलोप अनुमीयते, यथा ग्रन्थादो मङ्गलकरणबोधिका श्रुतिः[३] एवमन्या अपि श्रुतयः, तासामुच्छिन्नत्वेन शिष्टाचारानुमितत्वमात्रस्यावशेषेऽपिदेवादि बुद्धिग्राह्याणां वेदानामनन्तत्वमेव "देवादयोऽपि यस्यान्तं"[४] न ययुः शब्दवारिधेः इतिवचनात्। ये च अनन्ता स्तेषामन्तवत्तवासंभवात् प्रलयकाले मायाशवलित बह्मण्येव लीनाभवन्ति सृष्टि काले च तत एवाभिर्भवन्ति —

**तम आसीतमसा गूहूवमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।**
**तुच्छेनाभ्वपिहितं यदासीतपक्ष स्तन्महिना जायेतकम्।।**[५]

---

१. मनु० ३/२.
२. छा०उ०शा०भा० ८-११/३.
३. मु० मङ्गलवादः।
४. वेदस्व०वि०, पृ० ३.
५. ऋ०वेद० १०/१२९/३.

आसीदिदं तमोभूतमप्रज्ञानमललणम् । अप्रतवर्यमनिर्देश्यं प्रसुप्तमिव सर्वतः इत्यादि उक्तेश्च ज्ञानेषु प्रविष्टानां शब्दामामप्यानत्यं सुस्पष्टं प्रतीयत एव अतः सवमेव ज्ञानं शब्दानु र्विद्धमेव भवति न तद्रहितम्, अतएव —

**न सोऽस्ति प्रत्ययोलोके यः शब्दानुगमादृते ।**

**अनुविद्धमिव ज्ञानं सर्वशब्देन गम्यते ।।**[१] इति शिष्टोक्तेः ।

अत ईश्वरीयानन्त ज्ञानेष्वनुविद्वानां शब्दरूप वेदानां नित्यत्व-मतएवानन्तत्वमिति सारस्वतः सिद्धो बाधकाभावः । अत एव वेदरेव ब्रह्मसृष्टिं करोति इत्युक्तिः सङ्गता भवति, एषुस्गलेषु वेदशब्देन तत्त्वान्तरं निर्दिष्टम् —

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।**

**वेदशब्देभ्य एवादो पृथक् संस्थाश्च निममे ।।**[२] इति ।

शब्द इति चेन्नातः[३] प्रभवात् प्रत्यदानुमानाभ्याम् इति शब्द पद निर्देशात् अतश्च भूरिति व्याहरत्, तस्माद् भुवमसृजत्,[४] इत्यादिना शब्दोच्चारणपूर्विका सृष्टिः श्रुयते, यथा ओदनं पच इत्युक्ते तथा करोति शब्दश्रवणसमातन्तरमेव नतु श्रवणात्पूर्वमतोलोकदृष्टान्तानुरीध्ययं दृष्टान्तः ।

## सूर्यस्य त्रयीमयत्वम् –

सूर्यस्य त्रयीप्रोक्त कर्मफलात्मकत्वात् 'वेंदरसून्येस्त्रिमिरेतिसूर्यं

---

१. मनु० १/५.
२. मनुस्मृति – १/२१.
३. ब्र०सू० – १/३/२८.
४. ते०ब्रा० २/२/४१२.

इत्यप्युपयुक्तमेव कर्मणां प्रातरादिभेदेन कीर्तने तु सवन प्राधान्यात्, अतएव तदभिप्रायेणेवलतत्कालानां ऋगादिमत्त्वम्, तत्त्वान्तरार्थकत्वे कथमशून्यत्व व्यवस्था सूर्यस्य सेत्स्यति, अतएव सूर्यस्त्रयीमयः ।

ननु कथमिदं संभवति —

**ऋग्भिः पूर्वाण्हे दिविदेव इर्यते यजुर्वेदे तिष्ठतिमध्येऽह्नः ।**
**सामवेदेनास्तमये महीयते वेदरशून्येस्त्रिमिरेति सूर्यः ।।**[१]

इतिश्रुत्याऽऽरम्भमध्यान्तिमभागानां दिवसर्तिनां क्रमशो ऋग्यजुः सामत्वं सिद्ध्यतीति चेत् ।

न अह्नः पूर्वाण्हादिभागेषु ऋगादिमत्त्वोक्त्योक्तभागत्रयस्य ऋगादित्वासिद्धेः, नहि घटवद् दिनमित्युक्त दिनस्य घटत्वं सिद्ध्यति, अपि तु कालिक सम्बन्धेन घटाधिकरणं दिन मित्येवायात्यनुभवपथम्, सिद्धिस्तदनुसारिण्येव, कल्पनाया दृष्टार्थत्वानुरोधात्, तत्रास्त्येवप्रमाणं मन्त्रविद्व्याख्यानरूपम् —

'दिविवर्तमान'[२] आदित्यो देवः पूर्वाण्हे काले ऋग्देवताभिः सह गच्छति, अह्नो मध्यमेभागे यजुर्वेदतायाः समीपेऽवतिष्ठते । अस्तमय काले सामवेददेवताया पूज्यते । तदेवं त्रिभिविरमियुक्तः सूर्यः सर्वदा गच्छति इति ।

एवं —

---

१. तै०ब्रा० १/३/१२/९/१.
२. तै०सा०भा० १/३/१२/९/१.

प्रातर्मध्यन्दिने चैव[१] तथा चैवापराण्हिके ।
त्रयो तपति सा काले ऋग्युजः सामसंज्ञिता ।।

ऋचस्तपन्ति पूर्वाण्हे मध्याह्ने च यजूंषि वै ।
सामानि चापराण्हे वै तपन्ति मुनिसत्तम ।।

ज्ञान्तिकं ऋदा पूर्वाण्हे यजुष्वन्तरपौष्टिकम् ।
विन्धस्तं साम्निसायाण्हे आभिचारिकमन्ततः ।।

मध्यन्दिनेऽपराण्हे च समे चैवाभिचारिकम् ।
अपराण्हे पितृणान्तु साम्नां कार्याणि तानि वै ।।

विसृष्टो ऋङ्मयो ब्रह्मा स्थितौ विष्णुर्युजुर्मयः ।
रूद्रः साममयोऽन्ते च तसमातस्या शुचिर्ध्वनिः ।।

तदेवं भगवान् भास्वान् वेदात्मा वेद संस्थितः ।
वेद विद्यात्मकश्चैव परः पुरुष उच्यते ।। इति।

तमृची [२]मनुष्यलौकमुन्नयन्ते, सोऽन्तरिक्षं यजुभिरुन्नीयन्ते, सोमलीकं स सामभिरुन्नीयते ब्रह्मलोकम् 'इत्यादि प्रमाणसद्भाव अस्मद दृष्टि गोचरतास्तीति ऋगादिमन्त्राणाधिष्ठातृदेवताविषयसम्बन्धिनाम् दृश्यते च देवताविग्रहादि प्रतिपादकं विवरणं हेमादूयुल्लेखेन निदर्शितम् —

---

१. मा०पू० १०२/१५-२०.
२. प्र०उ०प्र० ५.

अजास्यः [१]पीतवर्णः स्याद्यजुर्वेदोऽक्षसूत्रधक् ।
वामे कुलिशपाणिस्तु भूतिवो मङ्गलप्रदः ।।

ऋग्वेदः श्वेतवर्णः स्याद् द्विभुजी रासभानाः ।
अक्षमालाधरः सौम्य प्रीति व्याढ्यापनीद्यतः ।।

अथवर्णामिधी वेदो धवली मर्कटानाः ।
अक्षमालान्वितो वामे दक्षेकुम्भधरः स्मृतः ।।

नीलोत्पलदलाभासः सामवेदो हयाननाः ।
अक्षमालान्वितो दक्षे वाये कुभधरः स्मृतः ।। इति ।

एतादृश विग्रहवत्यी देवताः प्रतिवेदाभिमान्धिः सन्तीत्यत्र कीविप्रतिपद्यते ए एव आदित्यात्मभृताः सन्तजः पूवार्णह मध्याहूनापराण्हेषु तपन्ति, अनेनाभिप्रायेण प्रातरादिसवनेषु क्रमेण ऋग्युजः साम्नां प्रयोगा अपि दृश्यन्ते । सूर्यस्य एव ज्योतिष्ट्रमिति त्रयीमपत्वम् ।

चतुर्विधाः खलु पदार्थाः स्व ज्योतिषः । पर ज्योतिषः । रूप ज्योतिषः । अज्योतिषश्चेति, तत्र स्वज्योतिः सूर्यः परमज्योतिश्चन्द्रादय, रूपज्योतिश्च पृथिव्यादयः, अज्योतिषी वायूवादयः अन्य लौकिक प्रकाशनिरपेक्ष प्रकाश ववा तत्रैव स्व ज्योतिष्टेति सूर्यस्य तथात्वम् तथाविधस्येव वेदत्रयात्मकत्वामाम्नातम् —

---

१. वेद, स्व०वि०, पृ० ५.

यदेतन्मण्डलं [१]तपति तन्महदुवथं ता ऋचः । स ऋचां लीकः अथ यदेतदर्चिदाप्यते तन्महाब्रतम् । तानि सामानि । स साम्नां लीकः । अथ च एव एतस्मिन् मण्डले पुरुषः सोऽग्निः । तानि यजूंषि । स यजुषां लीकः । ऐषा त्रय्येव विद्या तपति । अन्यस्य ज्योतिराक्षयतदात्मसात्कृत्य[२] परत्र तज्ज्योतिः प्रथयन्तीति पर ज्योतिषस्ते च चन्द्रादयः, तेहि सूर्यज्योतिषा कार्यक्षमा सम्पद्यन्तहति ज्योतिः शास्त्र प्रसिद्धेः येषु च केवलं रूपं दृश्यते ते रूप ज्योतिषः पृथिव्यादयः, येषां रूपं न दृश्यते ते अज्योतिषी वायूयादयः एव च श्रुत्या रूप ज्योतिषि पृथिव्यामपि वेदत्रयं प्रदर्श्यते —

त्रयीवेविद्या[३] ऋची यजूंषि सामानि हयमेवर्चः । अस्यां त्वर्चति योऽर्चति स वागेवर्चः । वाचाह्यर्चति योऽर्चति । सोऽन्तरिक्षमेव यजंषि द्योः सामानि । सेषा त्रयी विद्या सोम्येऽध्वरे प्रयुज्यते इत्यादिना ।

एवं हि वेदं प्रसिद्धिस्त्रययां कथमिति चेदित्यतम् प्रत्येकं त्रीणि मण्डलानि भवन्ति, पिण्डमण्डलमेकंरूपं तदृगुच्यते, तस्माच्च पिण्डा तदीयाः प्राणाः निष्क्रम्य बहिश्चरान्ति, यस्मिनृ स्वल्पे महति वा प्राणे यावती शक्ति स्तावददूरं गच्छतिसः, पाथिवेषु पदर्धिवग्निरेव प्राणः [४]यत्किचिद्दार्ष्टिविषयमग्नि कमेवं तत् 'इति वचनात् ।

सचायाग्निरूपः प्राणेद्विविधः, चित्य, चितेनिधेयश्च, तयोश्चित्याः

---

१. शत०ब्रा० १०/५/२/१/३.
२. वे०स्व०वि०, पृ० १६.
३. शत०ब्रा० ४/६/७.
४. निरुक्त, ६/८/३.

प्राणामर्त्याः चितविधेयास्त्वमृताः, चित्याः प्राणा स्व चयनेनव वस्तुस्वरूपं निष्पादयन्ति, तद्रक्षण एव व्यापृतास्तत्रेवतिष्ठन्ति चितेनिधेयास्तु बहिरपि प्रचरन्ति, एष च प्राणानां यदन्तियं मण्डलं तत्साममण्डलमित्युच्यते षीऽन्तः कर्मणि'इति धातीर्निष्पन्नस्य सामशब्दस्य तथार्थत्व सिद्धेः, ऋचा समं मेन 'इति' नदाना इति रीत्या विचारणे तु यावतीयस्य ऋग्भवति तदनुकूलमेव तस्य सामेति समत्व दृष्ट्या सामशब्दस्य प्रयोगः। ऋचामारभ्य सामपर्यन्तं प्रत्येकस्मिन्विक्षे शतशी मण्डलानि भवन्ति तेषु यत्प्राणरूपमग्नितत्त्वं व्यापूतं तदेव 'यजु' रित्युच्यते प्राणाहि वेदिव्यां परिभाषा यामग्निपदेनोच्यते।[१] अग्नीषोमात्मकं जगत् 'इति' अध्यत्रापि नामान्तरेण तयोरेव निरुक्तिं दर्शयत्यग्नेः प्राणरूपेण सोमस्य रयिनाम्ना स एवं[२] वैश्वानरो विश्वरूपः प्राणोऽग्नि रूदयते इत्यादिना। रयिप्राण योः स्वरूप प्रपञ्चं पितत्यान्ते मूतिरेवरयिः[३] इत्यादिना। सौमस्यौत्यादकता रयि नाम्नि तत्त्वे, आन्नयुत्पादकतातु प्राणे इति।

इदं तत्रवधातव्यम् — प्राण एव मुख्यं तत्त्वं वैदिकेविज्ञाने, यथाअद्य तने विधुति, अग्नीन्द्रादि पदे एतस्थ तत्त्वस्य निर्देशो वेदे 'यथाग्नि गर्भां पृथिवी यथाद्यारिन्द्रणगर्भिणी 'पृथवीपिण्डप्राणस्याग्नि नाम्ना सूर्यप्राण-पिण्डस्यचन्द्र नाम्ना निर्देशः कृतः, वेदानां प्राणे प्रतिष्ठितत्वमन्यत्रापि यथा अराहव रथानाभो प्राणे सर्व प्रतिष्ठितम्। ऋचो यजूंषि सामानि यज्ञः दात्रं ब्रह्मच[४]। इति मन्त्रे प्राणे ऋकसामयोः प्रतिष्ठा प्रतिपादिता।

---

१. बृ०जा०उ० २/४.
२. प्र०उ०प्र० १/७.
३. प्र०उ०प्र० १/५.
४. प्र०उ० २/६.

एवं अग्निर्जागार[१] 'तमृचः कामयन्ते । ओगनर्जागार तमु सामानि यन्ति । अग्निर्जागार तमयं सोम आह । तवाहमस्मि सख्ये न्यीकाः अथाग्निना यजुष उक्ति रन्यथोक्त 'अरा' इत्यादि ब्राह्मणवाक्य विरोधात्, सोमस्यचाग्नि सहचरत्वं न्यूनत्व बोधकेन न्यीका इति पदेनोक्तम् सोमसहचरत्वा-भावादग्नेन्यूर्नत्वमित्यर्थः । सचार्थः श्रुयतेऽन्यत्रापि यावन्तः ।[२] पावकाः प्रौक्ताः सोमास्तावन्त एव हि 'इति' अनयाच वाचोभङ्याध्वन्यते अग्न्यात्मकं प्राणतत्वमेवावस्थाभेदेन स्थानभेदेन च विभिन्नतां गते यथा पृथिवीस्थान स्थितोऽग्नि ऋक्स्वरूपम्, स एवाग्नि द्युलोकपर्यन्तं यदा स्व ज्योतिः प्रभावाद् यदा गच्छति तदा साम, अन्तरिक्षस्थितन्तु यजुरित्येतत्स्थानभेदे नाग्निवायुसूर्य-रूपत्वमुक्तम्, वस्तुत एवमेव एकं सदविप्रा[३] बहुधा वदम्त्यग्निं यमं मातरिश्वान माहुरितिश्रुतेरिति, तस्मादेव ऋग्वेद[४] एवाग्नेरजायत, यजुर्वेदो वायोः सामवेद आदित्यात् इत्थग्निवायुरविभ्यिस्त्रयाणां वेदनामुत्पतिरास्याता इतरेतर जन्मानी ।[५] भवन्ति इतरेतर प्रकृतयः इति गुणव्यत्थय[६] एतस्मिन मायावित्वादधीशितुः । न पोवापर्यभिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिव । इत्याद्युक्तया नास्ति पावापर्य-क्रमनियतीजन्यजनकभाव अतः कुत्रचिद् देवेभ्यो वेदसृष्टिः कुत्रचिच्च विदेभ्यो देव सृष्टिरिति श्रुयते यथा —

१. ऋ०के०स० ५/४४/१५.
२. म०भार० ३/२२२/२७.
३. ऋ०वे०सं० १/१६४/४६.
४. ऐ०ब्रा० ५/३२.
५. निरु० ७/४/१२.
६. श्रीमद्भागवद्गीता ३/१०/३०.

**अग्निवायुरविभ्यस्तु[1] त्रयं ब्रह्मसनातनम् ।**

**दुदोह यज्ञसिद्ध्यर्थ मृग्यजुः सामलक्षणम् ।।** इति ।

निःश्वसितमस्य वेदा[2] इति च दृश्यते । अयमेव सङ्केतो वेदेषु क्रमशः ऋग्वेद अग्निमीले पुरोहितम् 'इत्यादिना पुरी दृश्यमानां पार्थिवाग्निमेव प्रस्तोति प्रथममन्त्रेण । यजुर्वेद दूषेत्वोर्ज्जेत्वावायवस्था इति वायुं स्तेति । आरम्भे सामवेदः सूर्यमण्डलाक्षयान्तमग्नि सूर्यरूपमेवस्तोति 'अग्न आयाहि वीतय'इत्यादिना । प्राणरूपोऽग्निः पृथिव्या उत्थाय सूर्य मण्डलपर्यन्तं गच्छति, यावत्पर्यन्तं रूपज्योतिषाणां प्राणानां प्रसर्पणं भवति तावत्पर्यन्तं तद्धस्तु दृष्टिगोचरं भवति, यस्य तु साममण्डलं नास्माकं चक्षुरिन्द्रिय पर्यन्तं तदेव दूरादालोक्यते । तत्रैव स्थितालयवः पदार्थाश्च न दृश्यन्ते तेषां लघुनः साम्नोऽस्मच्चक्षुः पर्यन्तमव्याप्तत्वात् । साममण्डलानिचानेक धामिद्यन्त इति ह्युक्तम् पृथिव्याः सामरथन्तरमुच्यते सूर्यरथं तस्तीति रथन्तरमिति, सूर्यमण्डलमभितो विराजमानं देवमण्डलमेव सूर्यरथ उच्यते, तच्च स्फुटं सूर्योपस्थानमन्त्रे ।

**देवानामुद्गादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आप्राद्यावापृथिवी अन्तरिक्षं सूर्यआत्माजगतस्तस्थुणश्चः ।।**[3]

'इतिसूर्यमण्डलस्य पस्ति देवानां रश्मीनां प्राणभूतानामनीकं-सेना तिष्ठति, आत्मेवेषां रथ'इत्युक्तेरिति, अस्यविवरणं कृतं पराशरेण[4]—

---

१. मनु० १/२३.
२. भाम०म०।
३. ऋ०वे०सं० १/११५/१. शु०यजु०सं० ६/४२, १३/४६.
४. निरु०, ७/४/१५.

**त्र्यशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः ।**

**आरोहणावरोहाभ्यां भानोरब्देन या गतिः ।।**

**सरथोऽधिष्ठितो देवे रादित्ये ऋषिभिस्तथा ।**

**गन्धर्वरप्सरोभिश्च ग्रामणी सर्पराक्षसं ।।**[१]

रितितादृशरथपर्यन्तं पृथिव्याः सामेति रथंतस्तीति व्युत्पत्ति एतत्रामुगुणा —

**'सूर्येण हि विभज्यन्ते दिशः स धौमहीभिदा ।**

**स्वर्गापवर्गौ नरका रसांकासि च सर्वशः ।।'**[२]

इत्युक्तिस्तत्रमानभतेनः सूर्यमण्डल पाश्ववर्ति कश्चित्पुरुषस्ततः पृथिवीमालोकेतयदि तदाअत्यन्तसूक्ष्मतारा कास्यं भूमिर्दृश्यतः। ततः परन्तु सर्वथादर्शनाभाव एव, सूर्यस्य मण्डलं तु 'बृहत्साम पदेनीच्यते, प्रकाशान्तर्गतं भूम्यादि सर्वमत एव भगवतां ''बृहत्साम तथा साम्नाम्। इत्युक्तम् रथन्तराद्यपेक्षयातस्थ वृहत्वात्।

अत्र ऋकसामे आयतनमात्रे, तेषुमण्डलेषुपरिव्याप्तमानं यजुस्तु रसरूपम्, तेनेव सर्व कार्यजातं वस्तुत्पद्यते, सूर्यचन्द्रादिकिरणसंर्युत्केनेवास्मद् दृष्टानां वस्तुनामुत्पत्तिरिति तु सर्वेषामगवतमेवेति विभागयाम्। पार्थिवानां पदार्थविशेषाणां शक्तिरचिन्त्या दुःखबोधा च प्रतीयते, दूरस्थे रपि ततद्

---

१. विष्णु०पु० २/१०/१-२.
२. श्रीमद्भा० ५/२०/४५, देवी भा० ८/१४/१८.

वस्तुभिः स्वानुरूपं कार्य जन्यत एव वैज्ञानिक दृष्ट्यापि।[१] रात्रो 'कार्बनडाई अक्साइड 'इति नामकं तत्त्वं वृद्धी भवति तेन तत्र रात्रौ नैव वस्त्रव्यमिति, एवं तिन्तिडीवृक्षस्याद्यौशयनेन वायुः प्रकृष्यति, निम्बस्याद्यताच्क्षयनेन तु सर्वे धातव प्रसीदन्तीति पुरातना आयुर्वेदिका वदन्ति, अति तीक्ष्णं मलिनंद्रव्यं स्त्रीरज आदि दूरस्थान्धेव कोमलानि वस्तूनि पुष्पादीनीम्लापपयति, एतच्च वैज्ञानिक परीक्षाप्रविधिभिः सिद्धमस्माकं परम्परासु तु तत्सिद्धंशास्त्र।[२] प्रामाण्यात् 'तासामाद्या चतसस्तु निन्द्याः' इति। एतत् सर्व यर्जुमण्डलेस्थितेन ततत्पदार्थप्राणभूतेन रसेनेव क्रियते, "रसो वसः रसं ह्येवायं लब्ध्वानन्दो भवति।[३] इति श्रवणात् एवं हि यजुर्निष्पति ऋक्सामाधीनां ऋगपि सामात्रितेव भवति, तत्र केन्द्रभूता ऋगेव, ततः प्रसर्पणमन्धेषामित्युक्तप्रायम्, 'तदेतदेतस्यामृच्चव्यूढं साम'।[४] इत्यनेनव ऋच प्राधान्यम्, तथा च ऋचं विना सामन तिष्ठतीति यावत्।

एवं ऋङ्नाम्नी मूर्तिरपि साममण्डलपर्यन्तं व्याप्नोति, प्रसर्पन्त्याभूतेः केन्द्रविन्दुनं प्रसरति, केन्द्रस्यापि प्रसर्पणे वस्तुनीऽन्यथाभाव प्रसङ्गात् केन्द्रपार्श्वं वर्तिनो द्वौ विन्दूतावपि तिर्यग्गत्या द्वितीय विन्दा वेकीभवत् इति द्वितीय विन्दुत्येन मूर्ति र्हसति, तदा च विन्दुद्वयेकीर्भूतक भावजन्यी-विन्दुरेव केन्द्रभूतो भवति एवं क्रमेन स न प्रसर्पत्यग्र इति प्रक्रिया प्रवर्तते

---

१. वेद, स्व०वि०, पृ० १८.
२. मनु०, ३/४७.
३. ते०उ०शि०अ० ७.
४. छा०उ० १/६/१.

क्रमेणेव एवं हि यावद्दूरं ऋगास्यामूर्तिः प्रसर्पति तावत् प्रतिविन्दु बिन्दु द्वय क्रमेण सा ह्सतीति दूरस्थेन प्राणिनालघुभूतं वस्तु दृश्यते। ऋगपेक्षया साममण्डलमति वृहदिति सर्व मण्डलमभिव्याप्नुद्वकसूक्ष्मा भवतीति युक्तितः सिद्धं भवतीति, ततो हि अति महति साममण्डलेऽस्मद्यदृष्टि पर्यन्तमागतोयावानू च आकारस्तावत्मेवमूर्तिरस्माभिगृह्यति। दूरस्थस्य वस्तुनः कथं लघुत्व दर्शनं भवतीति प्रश्नं समाधातुमाधुनिका वैज्ञानिका न प्रभवन्त्यध्यापि वैदिके तु विज्ञाने सुस्पष्टं समाहितं वर्तत एव —

**ऋग्भिः पूर्वाण्हे दिवि देव दूयते यजुर्वेदे तिष्ठति मध्येह्नः ।**
**सामवेदेनास्तमये महीयते वैदेरशून्यस्त्रिभिरिति सूर्यः ।।**[१]

**वेदाना चतुष्टं त्रित्वर्वति विचारपूर्वकंत्रित्वेस्थापनम् –**

सूर्यस्य त्रयीमयत्वं जगतश्च सूर्याधीनस्थित्यादिमत्वात्कालादेरपि तथात्वाद् वेदानामपि त्रित्वं प्रसाधितमुकेनसन्दर्भेण। ननुकथमिदं संभवति ? वेदगत चतुष्ट्रव संस्थायाः सर्वत्र श्रूयमाणत्वात्। यथा हि—

ऋग्वेदं[२] भगवोऽध्येभियजुर्वेदं सामवेदमाथर्वणं चतुर्थम् इति एवं हि यज्ञकर्मणि त्रयी निष्पाद्यं कर्म अर्थ भवति अर्थतु अथर्वण वेदनिष्पाद्यं त्रयया एव वेदत्वेऽर्थ कर्म परिनिष्पन्नं नस्यात् अर्थवण धर्मनिष्पापत्व च।

'प्रजापतिर्यज्ञं मतनुत'[३] स ऋचेव होत्रम् – अकरोत् यजुषा

---

१. तै०ब्रा० – ३/१२/९/१.
२. छा०उ० ७/१/२.
३. गीता०ब्रा० १/३/२.

ध्वर्यवं साम्नोद्गात्रम् अथर्वाङ्गिरीभिब्रह्मत्वम् इति प्रकम्य —

स वा एष त्रिभिर्वेदेयं ज्ञस्यान्यतरः पक्षः, संस्क्रियते। मनसेव ब्रह्मयज्ञस्यान्यतरं पक्षं संस्करोति इति अन्यत्रापि त्रयीनिष्पाद्य एकः पक्षो मनोनिष्पाद्यः परः पक्ष इति श्रूयते —

अथर्व यज्ञो।[१] योऽयं पर्वते। तस्य वाक् च मनेश्चवर्तन्यो। वाचा च हि मनसा च यज्ञोऽवर्तत इयं वे वाक्। अदीमनः। तद् वा चा त्रयूया विधेयकं पक्षं संस्कुर्वन्ति। मनसेव ब्रह्मा संस्करोति हत्येतदभिप्रायेणैव।[२]

प्रश्नपूर्वकं अथर्वविद एवं ब्रह्मत्व नाम्नातम् —

अथ ह प्रजापतिः सामेन यक्ष्यमाणे वेदान् उवाच[३] – कं वो होतारं वृणीयाम्। कमध्वर्यम्। कमुद्गातारम्। कं ब्रह्मणमेति। ते होचुः – ऋग्विदमेव होतारं वृणीष्व। यजुर्विद मध्वयर्म। सामविदमुदगातारम्। अथर्वाहिरीविदं ब्रह्माणम् तथा हास्य यज्ञश्चतुष्यात् प्रतितिष्ठति तत्रैव।[४] विपदाबाधश्च श्रुतः —

अर्थवद नवविधब्रह्माणवृणुते दक्षिणत् एवेषां यज्ञोरिच्यते इति यर्थकपाद् पुरुषो यन् अनुभयतको वा रथो वर्तमानो भ्रेषंन्येति एवमेवास्य यज्ञो भ्रेषंयेति।[५] इति चात् एतादृशमहत्व शलिनो वेदस्य अथर्वाङ्गिरसः

---

१. ऐ०ब्रा० ५/३/३.
२. अथर्व०भा०भू०।
३. गीता०ब्रा० – १/२/२४.
४. अथर्ववेद भा०भू०।
५. अथर्ववेद – १/२/२४.

परित्यागो नोचित इति एवं —

तत्रपरा ऋग्वेदोयजुर्वेदः सामवेदोऽथर्ववेदः ।[१] इति ।

ऋग्यजुः सामाथर्णाश्चत्वारो वेदाः ।[२] इत्याद्युपनिषत्स्वपि बहुश आम्नानात् चतुष्ट्वमेव सर्वत्र श्रुतमितित्रिष्टत्व भज्येतेति चेत् —

सत्यम् – वेदगतमन्त्राभिप्रायकत्वेन त्रविध्यात् त्रैविध्यं तु यं ऋषयस्त्रयिविदा विदुः । ऋचः सामानियजूंषि तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे[३] इति त्रयो वेदा ।[४] अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् इत्यादि श्रुति सिद्धम्, तथैव समर्थितं वेद तात्पर्य विद्भिः —

तच्चेदकेषु मन्त्रास्या ।

तेषामग्रयत्रार्थवशेनपादव्यवस्था ।

गीतिषु सामाख्या ।

शेषे यजुः शब्दः ।

इत्यादिभि ऋग्यजुणां लक्षणकरणेन तेषां प्रतिष्ठा स्थापितेव, अतोयथा प्राप्तस्यार्थवाङ्धिरो वेदस्यापि न त्रित्ववहिर्भूतत्वम् वेदं शून्येस्त्रिभिरिति सूर्यं इति श्रुति 'ऋग्भिः पूर्णाण्हे' इत्यादि कालाधिकरणवेदाधिष्ठात् वेदताभिप्रायेणात् अथर्वाङ्गिरो वेदस्याप्यस्ति तथात्वमिति कोविरोधः ?

---

१. गीता ब्रा० १/३/२.
२. मु०उ० १/१/५.
३. नृ०सि०पू० – १/२.
४. ते०ब्रा० १/२/१/२६.

अपिच —

अथर्वाङ्गिरो वेदो न त्रयी भिन्नः यत सौरप्राणप्राधान्येन पुरुषाणां सोमगर्भितषार्थिवप्राणानां प्राधान्येन च स्त्रीणामविभार्वः अतः स्त्रीणां शक्ति रूपत्वं पुरुषाणाञ्च शिवरूपत्वं शास्त्रसिद्धम् —

विद्याः समस्त तवदेविभेदाः स्त्रियः समस्ताः सकला जगत्सु[१] वासिष्ठलेङ्गे समुद्धृतत्वेन —

**[२]गौरीरुपाणि सर्वाणि शरीराणि शरीरिणाम् ।**
**शरीरिणस्तथा सर्वे शङ्करांशा व्यवस्थिता ।।**

इत्यादिभिः । यज्ञो वे विष्णुरिति श्रुतिवलोधेऽन्नं कर्षति स एव विष्णुः तेन च यज्ञ विष्णोरभेदः सिद्ध्यति अन्न च सोम यत्र हूयते सोऽग्निः अतएवचान्नरूप यज्ञेविष्ण्वग्निसोमानां तिसृणां देवतानामन्तर्भाव इतिसिद्धं भवति यज्ञस्यापि काल निष्पाद्यत्वं तस्याचानन्तत्वं यथा —

**[३]कालेऽयमङ्गिरादेवीऽथर्वाचाधितिष्ठतः ।**
**इमं च लोकं परमं च लोकं पुण्यश्च लोकान्विधृतीश्च पुण्याः ।**
**सर्वाल्लोकानभिविजित्य ब्रह्मणा कालः स इर्यते परमो नु देवः ।।**
**[४]तम आसीतमसागूहमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।**
**तुच्छेनाभ्वयिहितं यदासीतपसस्तन्महि ना जायतेकम् ।।**

---

१. सप्तश, ११/५.
२. लालि स०, पृ० ३२०.
३. अथर्वः सं० १९/५४/५.
४. ऋ०वे०सं० १०/१२९/३-४.

**कामस्तदग्रे समवर्तताधिमनसोरेतः प्रथमं यदासीत् ।**
**सती बन्धुमसतिनिरविन्दन्हृदि प्रतीष्या कवयो मनीषा ।।**

एवं हयन्यत्रापि —

अयमेवा[1]काशे जूः ! यदिदमन्तरिक्षमे तं ह्याकाश मनुजवते तदेतद्यजुर्वायुश्चान्तरिक्षश्च षच्च जूश्च तस्माद्यजुरेष एवषदेष ह्येति तदेतद्यजुरुर्क समयोः प्रतिष्ठितमृक्समि वहतः इति ।

अग्निरेव पुरः अग्निं हि पुरस्कृत्येमाः प्रजा उपासत आदित्य एव चरण यदा ह्येवेष उदेत्यथेदं सर्वचरति तदेतद्यजुः स पुरश्चरणमधि-देवतमेति नानाविधे रुक्तिभिरन्नाग्हादीनां कालं गर्भान्तर्गतत्वम स्तीति – कः खलुनियमभेदो येन प्रति वस्तुनो व्यावृत्तिः सिद्धयेत् अत उत्तरम्-वेदमन्त्रैरेव कालस्याग्नि सोम गर्भवता प्रतिपादिता यस्य वस्तुनो गर्भेस्थिति एतदेव वस्तु यथा समयमाविर्भवति तदनुरोधिनोलोकस्थितिस्तद्बोधका वेदा इति तेषां द्वैविध्यं स्वभावत आपतत्येवयतः पूर्व भेदा एवहिरण्यगर्भान्तः करणे प्रस्फुटिकास्तपः प्रभावेण, प्रारब्ध शेषेण च तस्यैवसृष्टि कर्मणि प्रवृति —

"रूपं विचित्रमिदमस्या विवृण्वतो मे मारीतिष्ठिनिगमस्य-गिराविसर्गः" इति प्रसङ्गात् अतः सृष्टि प्रक्रिया द्विविधा अग्निमयो आपोमयी च —

**[2]सर्वेषां च स नामानि कर्माणि च पृथक् पृथक् ।**
**वेदशब्देभ्य एवादो पृथक् संस्थाश्च नियमे ।।**

---

१. शतपथ १०/३/५/२-३.  २. श्रीमद्भागवत, ३/९/२४.

इति स्मृतेः सभूरिति व्याहरत भूमिमसृजत'इति श्रुतेश्च, शब्दपूर्विकव सृष्टिः प्रपचिता "कारणागुणाः कार्यगुणा नारभन्त।"[१] इति न्यायेनापि तथेव सिद्धेरतो वेदानां द्वैविध्यं नास्ति विभ्रमः। तत्राग्निमयः सोममयश्च वेदोद्विविधः वेदत्रयी अग्निमयो अथर्ववेदो हि-आपोमयः सोमस्वरूपः अग्निमय वेदस्य ऋक्-साम्-यत्-जू इति भेदेन चतुष्कलत्वम्, ऋक् साममध्यपतितस्ययजुष स्तत्त्व द्वयं यत् जू भेदेन निरार्शितम्। तत्र 'यत्' इति गतितत्त्व बोधकं, तस्यैव 'प्राण' नाम्ना वायु नाम्ना च प्रसिद्धिः। 'जू' इति च स्थितितत्त्व-बोधकं तस्य वाङ्नाम्ना आकाश नाम्ना च प्रसिद्धिरतएव वायुकाशरूप स्थितिगतितत्वयोः समष्टिरेव यजुः। अत एव वाग्रूप 'जू' भागाज्जलस्यैवोत्पतिर्युक्ता, एतद्धिप्रायेण।

सोऽयं सृजत वाच एव लोकान वागेवास्यसासृज्यत सेदं सर्वमाप्नोद्यदिदं किं च यदाप्नोतस्मादापो यद्वृणीतस्माद्वाः।[२]

'अप एव ससर्जादो तासु बीजमवासृजत्'।[३] इत्यादयः श्रुतयः स्मृतयश्चप्रवृत्ताः त्रयी ब्रह्मरूप वागभागादुत्पन्नस्य सोमतत्त्वात्मकस्य आप्यस्य नाम एवअथर्ववेदः, यजुरूपस्वायम्भुव ब्रह्मणः श्रमजलमेव अथर्वाख्यं सु ब्रह्म रूपम्, अत एव त्रयी वेदः स्वायंभुव ब्रह्मरूपः, अथर्ववेदस्तु सु ब्रह्मरूप इति, अयमेव सु ब्रह्मरूप आपोमय वेदो भृग्वङगिरोभेदेन भागद्वये विभक्तस्तत्र

---

१. मनुस्मृति १/२१.
२. वे०सू०उ० २/१/२४.
३. शतपथ – ६/१/९.

भृतुभागस्य धन तरलविरलेत्थवस्थाभेदनिबन्धन आपवायुसोमइत्यवस्था त्रयभेदः अङ्गिरोभागस्यापि – अग्नियमाऽऽदित्यभेदेनावस्थात्रय आपोमयाथर्व वेदस्य षट् कलत्वं सम्पद्यते। एवं हि–आपोमय षट् कलाथर्ववेदेन सह चतुष्कलस्याग्निमय त्रयो वेदस्य समन्वर्यनकीभावः। एतदभिप्रेत्येव श्रुतिः —

**आपोभृग्वाङ्गिरोरुपमापो भृग्वङ्गिरोमयम्।**
**अन्तरेते त्रयो वेदा भृगूनङ्गिरसः श्रिताः ।।**[१]

पूर्वोक्त षट् कलयुक्तं ब्रह्मसोम्यत्वात्स्त्रीस्वरूपम् चतुष्कलयुक्त च त्रयो ब्रह्म आग्नेयरूपत्वात्पुंरुपम्, सा वेदमूर्तिः, स पुराणपुरुषः, तदेव ब्रह्म अतएव तत्र ब्रह्मशब्दप्रयोगः "वेदो नारायणः साक्षात्" इत्युक्तेः, तस्य च ब्रह्मण अभिन्नत्वं, स पुराणपुरुष एव स्वं द्विधा विभज्य विराजमुत्पादयति, एततभिप्रायेण —

**[२]द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।**
**अर्धेन नारी तस्या स विराज मसृजतप्रभुः ।।** इति ।।

तथा च ऋक्-साम-यत्-जू-आप-वायु-सोम-अग्नि-यम-आदित्येति भेदेव विराट् पुरुषो दशकलः। स एवाक्षरः प्रजापतिर्वेदरूपेण परिणम्य दश कलो भवति आधारमिममनुसृत्य दशाक्षरा वे।[३] विराट् इति कथ्यते अस्मादेव पुरुषा जगतसृष्टिः, सर्वेषां कार्यभूतानामग्नीषोमात्मकत्वम्।

---

१. शक्ति०, पृ० १०१ गिरिधरशर्मचतुर्वेदिनः।
२. मनु० १/३२.
३. शतपथ १२/२/२/९४.

भगवताप्युक्तम् —

[1]ममयोनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ।।
सर्वयोनिषुकौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्ममहद्योतिरहं बीज प्रदः पिता ।। इति ।

मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्व कार्येभ्यो महत्वाद् भरणाच्च स्व विकाराणां महद् ब्रह्मेति योनिरेव विशिष्यते । तस्मिन् महति ब्रह्मणि योगोगर्भहिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि । क्षेत्र क्षेत्रज्ञ क्षेत्रेण संयोज्यामीत्यर्थः । मूर्तयो देहसंस्थानलक्षणामूच्छिर्तांङ्गावयवा मूर्तयः संभवन्ति या एतासां मूर्तिनां ब्रह्ममहत् सर्वावस्थं योनिः कारण महमीशो बीजप्रदोगर्भाधानस्यकर्ता पितेति । श्रुतो —

[2]अग्नीषोमयो रुज्जितिम् । इति
[3]यत्र ब्रह्म च क्षत्रं च सम्य चौ चरतः सह । इति
[4]अस्य क्षत्र मग्नीषोमावस्मै धारयतंरयिम् । इति च ।

**स्मृत्यादो –**

अग्नी षोमो कथं पूर्वमेकयोनीप्रवर्तितो 'इत्यनेन प्रश्नमुत्थाप्य-

---

१. गी० १४/३-४.
२. शु०यजु०सं० २/१५.
३. वही – २०/२५.
४. अथर्व सं० ६/५४/२१/९०/३.

प्रतिवचनक्रमे उत्तरं प्रस्तुवन् प्रलयावस्थां प्रकृत्यनिरर्शनमुपस्थापितम्। नासदासोदित्यादि सूक्तार्थ प्रदर्शनेन, ततश्च निर्णयरूपेण —

तस्योक्षनां तमसः सम्भवस्य पुरुषस्य ब्रह्मयोनिर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसक्षमानो नेत्राभ्यामग्नावोमो ससर्ज। ततोभूतसर्गेषु सृष्टेषु प्रजाक्रमवशाद् ब्रह्मक्षत्रमुपातिष्ठत। यः सोमस्तद् ब्रह्मयद् ब्रह्म ते ब्राह्मणाः, योऽग्नि स्तत्क्षेत्रम् ब्रह्म बलवत्सम्॥ इत्युत्तरमुपस्थापितम्। एवं बहुशं श्रुतो यथा —

यज्ञो वैदशहोता "विराड्वा येषां दशाहानि"[१] 'विराड वै यज्ञः'[२] दशक्षरा वे विराड् [३]'यज्ञवै प्रजापतिः' [४]'प्रजापति वै दशहोता।' [५]'प्रतिष्ठा दशमहः एतद्वै वृत्स्नमन्नाद्यं यद् विराड् 'विराड् विरमणाद्' 'विराजनाद् वा' एवमग्नीषोमपूर्वकत्व माम्नात् मन्यत्रापि —

**जगद्विृताय चरतोः स्वेच्छा धृत शरीरयोः**
**आवयोविप्रयोगे हि स्यानिरालम्बनं जगत्।**
**अस्ति हेत्वन्तरं तत्र शास्त्रयुक्ति विनिश्चितम्**
**वागर्थमिव चे वैतज्जगत्स्थावर जङ्गमम्॥**

---

१. म०भार० १२/८/९.
२. तै०ब्रा० – २/२/१/६.
३. को०ब्रा० – १०/१.
४. ते०ब्रा० २/२/१/६.
५. को०ब्रा० ७२/२.

**त्वं च वागमृतं साक्षादहमर्थामृतं परम्**

**द्वयमप्यमृतं कस्माद्वियुक्तमुपपद्यते ।**

**विद्याप्रत्यायिकारत्वं मे वेद्योऽहं प्रत्ययातव**

**विद्या वेद्यात्मनोरेव विश्लेषः कथमावयोः ।।** [१]

किं च —

**अहमग्नि शिरोनिष्ठस्त्वं सोम शिरसिस्थिता ।**

**अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् ।।**

इत्यादि प्रपञ्चपूर्विका भगवतीमुमां प्रतिं भगवतः शङ्करस्योक्ति रग्नीषोम विषयिणी इमोचाग्नीषोमो न परस्परमेकं कारणम्, अपरं च कार्यमिति रूपेण स्थितो निश्चिततया अपित्वनियततयेवानयोः कार्य कारण भावः शास्त्रेषु प्रदर्शितोविवक्षाधीनतया नतु परमार्थतो यथा।

**अग्नीषोमो मिथः कार्यकारणे च व्यवस्थिते ।**

**पयायेण समं चेतो प्रजीषेते परस्परम् ।।**

**जन्माङ्ग बीजाङ्कुरवत तथा दिवस रात्रिवत् ।**

**स्थितिश्चाया तपसमा केवला सेतष्यो भवेत् ।।**

**तुल्यकालोपलभ्भासावित्थं छाया तप स्थितिः ।**

**केवल कोपलम्भाळ्या स्थितिर्दिवस रात्रिवत् ।।** [२]

---

१. शिवम् पु०वा०सं० २७/१३-१७.
२. यो०वा० ६पूर्वा – ८१/८०/९०.

इत्यनेनानयोः कार्यकारणभावमूलकं निमित्तमुपदर्श्यपुनः परस्पर-मुत्पाद्योत्पादक भावं निदर्शयति —

**कार्य-कारणभावश्च द्विविधः कथितोऽनयोः ।**
**सद्रूपपरिणामोत्थो विनाशपरिणामजः ।।**

इत्थं द्विधा कार्य कारणभावः शास्त्रकृद्भिः प्रतिपादित स्तदनु च कुत्रकथमुत्पत्ति विनाशा वित्युदाहरणमुखेन लोकदृष्टिमनुरुध्य विस्तारयति —

**एकस्याद्य द्वितीयस्य संभवोऽङ्कुर बीजवत् ।**
**कार्यकारण भावेऽसो सद्रूप परिणामजः ।।**
**एकनाशेद्वितीयस्ययद्भावो दिनरात्रिवत् ।**
**कार्यकारणभावोऽसौ विनाशपरिणामजः ।।**

अनेनश्लोक द्वयेन द्विविध कार्यकारणभावलक्षणं कण्ठतः प्रतिज्ञाय अस्यकार्यकारणभाव ग्राहक प्रमाणं कतमदित्याशङ्कायाा मद्यि कारण सत्त्वे कार्यप्रत्यक्षे णैव ज्ञायते, न तत्रानुमानम्, अनुमितिं प्रतिसिद्धेः प्रतिबन्ध-कत्वात्, नहिकरिणि दृष्टे चीत्कारेण तमनुमिमते अनुमातार[१] इति वाचस्पति-मिश्र वचनात्, यथा घट प्रत्यक्षे नहि तत्रमृत्प्रत्यक्षं विलुप्यते। द्वितीये तु त्र तथा, अपित्वनुपलब्धिरेव तत्र प्रमाणम्, एकदेशकालावच्छेदेनेकस्येवाभावस्य प्रतियोगिनश्चासत्वान् अतौ रात्रौ न दिवस स्थितिर्दिवसे च न रात्रिस्थिति-रित्यनयोः सदानवस्थानरूप एव विरोध इति स्फुतीकृतं द्वितीयेन कार्यकारण

---

१. पक्षतापूर्वपक्षः ।

भावेन, वस्तुतः एतत्सर्व कार्यकारणभावास्थामूलकं दृष्टि सव्यपेक्षमेव, दृष्टि सृष्टि वादपेक्षया तु एतस्य कार्यस्योपक्षामूलत्वमितिम् स्वानुभूतिमन्त इति तथा प्रदर्शयति —

**सद्रूपपरिणामस्य मृदघटक्रम संस्थिते ।**
**अक्षोपलम्भादितरत्प्रमाणं नोपयुज्यते ।।**
**विनाश परिणामस्य दिन रात्रिक्रमस्थितेः ।**
**अभावोऽप्येक वस्तुस्थो गतोमुख्यप्रमाणताम् ।।**
**अनास्था नास्ति कर्तृत्वमित्याद्यायुक्ति वादिनः ।**
**अवज्ञया बहिष्कार्याः स्वानुभूत्यपलापिनः ।।**

पुनरनुपलब्धिः प्रमाणमप्रमाणं वेति संशय एव नोदेति तत्र हि लौकिक परोक्षकयोर्दृष्टिसाम्यमितिस्फुटी कुरुते —

**प्रत्यक्षवदभावोऽपि प्रमेव रघुनन्दन ।**
**अनन्यभावोऽपि शीतस्यप्रमाणं सर्व जन्तुषु ।।**

एतावता चाग्नीषोमयोः सत्त्वं परस्पर जन्यजनकभावं, तद् ग्राहकप्रमाणानि च निरूप्य ततः क्रमेणोभय कार्यकारणलक्षणं लक्ष्येषु समन्वित्यदर्शयति —

**अग्निधूर्मतया भागायां प्रयातिपयोदताम् ।**
**सद्रूपपरिणामेन तदग्निः सोमकारणम् ।।**
**अग्निर्नष्टतया शत्वादभावेव प्रयातियत् ।**
**विनाश परिणामेन तदग्निः सोमकारणम् ।।**

सप्ताम्बुधिपयः पीत्वा धूमोद्गारेण वाड़वः ।
पयोदतां प्रयातेन तदेव जनयत्स्थलम् ।।
अर्कः पीत्वा निशानाथमाया वास्यं पुनः पुनः ।
उदगिरत्यमलेपक्षे मृणालमिव सारसः ।।
पीत्वामृतापमं शीतं प्राणः सोमसुखागते ।
अभ्रागमात्पूरयति शरीरंपीनतां गतः ।।
जलमप्युद्वपां भोगे प्रत्यात्यर्कस्य रश्मिताम् ।
सद्रूप परिणामेन तज्जलं वह्निकारणम् ।।
नाशात्मकतयातोपयाठव्यत्वादितिह्यग्निताम् ।
विनाशपरिणामेन तृतीयं वह्निकारणम् ।।[१]

अनेन रूपेणोभयानुगतं कारणं पृथक्-पृथक् समन्वेयेन प्रदश्येषां स्थितिः किन्निष्ठेति स्थास्यति —

अग्नेर्विनाशे सद्रूपपरिणामो निशाकारः ।
इन्दोर्विनाशे सद्रूप परिणामो हुताशनः ।।
हुताशो नाशमागत्य सोमो भवति वैतथा ।
दिवसो नाशमागत्य रात्रिर्भवति वे यथा ।।

अग्नीषोमयो; पौर्वापर्यक्रमनिर्धारणं सर्वथदुः श्यक्यामित्युपपाद्य तेन च पुनः किंस्यादिति वास्तविकमनयोरुपमित्यत्र —

---

१. योoवाo ६, पूर्वा, ८१/९१/११०.

**तमः प्रकाशयोश्छाया तपयोर्दिनरात्रयोः ।**
**मध्ये विलक्षणं रूपं प्राज्ञैरपि न लभ्यते ।।**
**सन्धिरप्यविलोपः स्यादेतयोरेव तद् वपुः ।**
**भावाभावे पथेकास्था निष्ठावेतो तथैवहि ।।**

अनादिरूपेण स्थितयोरनयोर्जगन्निर्माणो केन रूपेणेति निरुपयन्नुपसंहरति —

**द्वाभ्यां चैतन्यं जाड्याभ्यां भूतानि प्रस्फुरन्ति हि ।**
**यथा तमः प्रकाशाभ्यामहोरात्रा महीतले ।।**
**चिद्रूपजडरूपाभ्यामारब्धेयं जगत्स्थितिः ।**
**जलामृताभ्यामित्राभ्यां शीतातनुरिवेन्दवी ।।**
**प्रकाश मनलं सूर्यचिद्रूपं विद्धि राधव ।**
**जडात्मकं तमो रूपं विद्धि सोम शरीरकम् ।।**

अग्नीषोमयोः स्वरूप निदर्शनमुपसंहारव्याजेन स्फुटीकृतमुक्त श्लोकद्वयेः मध्ये पुनर्विवरणान्तरं विभिन्नप्रकारेणोपपादनं विस्तरेण विधाय परमोपसंहार इत्थं रूपेण निष्कर्षयति —

**अन्योन्य लब्धसद्वाक्या वेधं कुड्य प्रकाश वत् ।**
**अग्नीषोमाविमो ज्ञेयो संपृक्तौ देह देहिनो ।।**
**अतिशायिनी निर्वाणे जाड्ये चैवातिशायिनि ।**
**अग्नीषोमस्य चेवाङ्ग स्थितिर्भवति केवला ।।**

अग्नीषोमयोर्जगत्कारणता प्रदर्शनेन तत्र संभावित दोष निराकरणेन

तयोस्वरूप प्रदर्शनेन चैवोद्दृढीकृत्यानादित्वं संसार निर्वाहकत्वं ज्ञान मात्र नाश्यत्वेनाज्ञानस्वरूपत्वम् ज्ञानावस्थायां प्रभाव ग्राह्यत्वं मायारूपत्वेन परमात्माभितत्वं परमात्मविषयत्व च सिद्धं भवति प्रदर्शितेन प्रकारेण तथा च यथा कार्यतथैव कारणेन भवितव्यमिति वेदानामप्यग्नीषोमात्मकत्वम्।

एवं त्रिभिर्वेदैविधीयते इति स्मृतिरूपयुक्तश्रुत्यनुसारेण मुख्यस्याथर्वविदोऽसंभवे ततच्छासासु यावदुक्तब्रह्मत्वमात्रेणाक्त्रितु शरीर निष्पत्तिर्भवत्येतदभिप्रायपरतया संलापनीया। एवं हि सति आपोमय सोम प्राधानाथर्व वेदस्य त्र्ययाश्रितत्वाभिप्रायेण त्रित्वव्यपदेश इति न विरोधः, नापि न्यूनत्वम् अथर्वस्य तत्रैव गतार्थत्वात्, अगतार्थाभिप्रायेण च चतुष्ट्व व्यपदेशः इयमभिप्रेत्य चौक्ति —

**पुराण तर्क मीमांसा धर्म शास्त्राङ्ग मिश्रिता ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशः ।।**[१]

अथवार्ङ्गिरोवेदस्य त्रयात्मकत्वेऽस्ति च शास्त्रान्तर सम्मतिर्यथा —

वयमप्येवमादीनिवाक्यानि ननाधीमहि किं त्वेषामयमेवार्थोऽथर्वाङ्गिरो विदेव ब्रह्मेतिकथनम्, यतो न त्रयी नाम किमपि वस्त्वन्तरम् अपितु त्रयाणां वेदानां समादृग् इति समाहारश्च समाक्रियमाण निष्ठो भवति, समाह्वियमाणाश्च ऋग्वेदादयस्त्रयी होत्रादिपरत्वे चरितार्थ न पुनस्तत्र भेदमर्हन्ति एकेकशश्चरितार्थानां समुदायोऽपि चरितार्थ एव समुदाय बुद्धोहिविभज्यमानायां

१. पात्र स्मृ० आ श्लोक ३.

समुदायिन एव प्रस्फुरन्ति नावयविवदर्थान्तरं तेचान्यत्र व्यपिता: किं न खलु ऋग्वेदादीनां ब्रह्मत्वंकुवर्तामतिभारो भवति न ब्रूम अतिभार इति किन्तु त्रयात्मकत्वेन ब्रह्मत्व कर्तव्यतो परिदृश्यते, त्रयात्मकश्चान्यतमोऽपि तेषां न भवति वेद: अथर्ववेदस्तु त्रयात्मक एव तत्राहि ऋचो यजूंषिसामानि इति त्रोट्यपि सन्ति तेन ब्रह्मत्वं क्रियमाणस्त्रय्याकृतं भवति ।[१] एवश्चाथर्ववेदस्य त्रयात्मकत्वेऽन्यदप्यस्तिप्रमाणम् —

अथर्ववेद[२] कृतोपनयन संस्कारस्य वेदान्तराध्ययनमविरुद्धम् अन्यवेदोपनीयमानस्य तु नाथर्वणीपनयन संस्कारमप्रापितस्याथर्ववेदाध्ययनेऽधिकार: तदुक्तम् —

भृग्वङ्गिरोविदा संस्कृतोऽन्यान्वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीतेति, त्रययेक शरणेरपि चैतदवश्याश्रयणीयम् अथर्ववेद विहितं एव कर्म भ्रंसेप्रायश्चितमाचरद्भिरित्यथर्ववेद एवज्यायान्। इत्यादि रूपेण प्रतिपादनादथर्वाङ्गिरो वेदस्य त्रयात्मकत्वे नास्तिविप्रतिपत्तिलेश: अत: सिद्धं वेदानां त्रित्वमिति सर्वमवदातम्।

**वेदानामपौरुषेयत्वम् –**

एतावत्प्रघटक द्वारा सम्पन्नेऽर्थे स भूरिति व्याहरत्भुवमसृजत, वेदशब्देभ्य एवादो पृथकं संस्थाश्च नियमे इत्यादि श्रवणाद वेदानामपौरुषेयत्व मापतितं भवति। तच्च कथमुपपाधते यतोहि वेदानां पौरुषेयत्वं श्रुयते वेदा:।

१. न्याय०, पृ० २३५.
२. न्या० मंजरी, पृ० २३८.

सर्वज्ञप्रणीता वेदत्वात् व्यतिरेकेण यन्न सर्वज्ञप्रणीतं स न वेदोयथा वाक्यान्तरमित्यनुमानेन वेदस्य सर्वज्ञ पुरुषप्रणीतत्वं सिद्ध्यति[१], यद्यपि परेः सर्वज्ञानङ्गीकारात्तप्रणीतत्वं परं प्रत्यसिद्धं तथाप्यात्मत्वमसंसारि वृत्ति जातित्वात् पटत्ववत्। स चा संसारी किञ्चिद्वाक्यप्रणेता पुरुषत्वादिति साध्यप्रसिद्धौ, वेदाअसंसारि पुरुषप्रणीता इति साध्यं पर्यवसितं भवति, तेन तदनुमानेनवेदस्यासंसारि प्रणीतत्वं सिद्ध्यति। अस्मदाद्युच्चरित वेदे व्यभिचार वारणाय वेद ज्ञाना जन्यज्ञानजन्यत्वरूपं साध्य विवक्षितम्, तथा च न व्यभिचारः।

अन्वयतोऽपि पोरुषेयत्वम् वेद वाक्यानि।[२] पौरुषेयाणि वाक्यात्वात् अस्मदादि वाक्यवदित्यनेनापीश्वर कर्तृकत्वं वेदस्य, अत्र पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चरितजातीयत्व माद्यस्मृता वपि तज्जातीयत्वान्नव्यभिचारः, यद्वा वेदत्वं सजातीयोच्चारणानपेक्षोच्चारणदृति एवं समानानुपूर्वीक सकलवाक्य वृत्ति धर्मत्वात् स्मृतित्ववववत् इत्याद्यनुमानं वेद पौरुषेयसाधकम्। स्मृतिरपि-प्रमाणम्।

**[३]अनन्तर च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः।**
**प्रतिमन्वन्तर चैषा श्रुतिरन्धा विधीयते।।** इति।

[४]वेदान्तकृद्वेदविदेवचाहम् इति च।

---

१. न्या०कु० ५/५.
२. न्या०कु०प्र०, ५/५.
३. न्या०कु० ५/५.
४. गी० १५/१५.

अश्रुतिश्च —

[१]'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इति वेदस्यपौरुषेयत्वेऽनुमानं प्रयुञ्जन्ति —

[२]वैदिक्यो रचना कर्तृपूर्विकारचनात्वाल्लौकिकरचनावत्, एष च पञ्चलक्षणे हेतुः प्रयोजकश्चेति यमक एवेति, गमकर्तापपिकानि चरुपाणि पक्षसत्त्व[३] सपक्षसत्त्व विपक्षव्यावृतत्वाबाधितत्वासत्प्रतिपक्षितत्वानि प च रूपाणि केवलान्वयिनौविपक्षव्यावृतत्वाभावेन, केवलव्यतिरेकि सपक्षसत्त्वभावेन चत्वार्येव गमकतौपयिकानि अन्वयव्यतिरेकिण एव एवं गमकतोपयिकानिपचेति। एव चगमकतापयिकान्यतर रूपशून्यत्वं हेत्वाभासत्वम्, इति हेत्वाभासलक्षणान्नात्र हेत्वाभासः। नतावदयमसिद्धौ हेतुः शन्नेदेवोरभिष्टये इत्यादिवेदवाक्यसन्दर्भेषु पदरचनायाः स्वरक्रमादि विशेषवस्थाः प्रत्यक्षत्वेन पक्षे हेतो वर्तमानत्वात् नापि विरुद्धः, कर्तृत्ववति सपक्षे कुमारसंभवादौ रचनात्वस्य विद्यमानत्वात्, नाप्यनैकान्तिक, कर्तृरहि तेषु गमनादिषु गगनं कुसुमादिषु वा रचनाया अदृष्टत्वात्, नापि कालत्ययापदिष्टः प्रत्यक्षेणागमेन वा वेदे वक्त्रभाव निश्चयानुत्पादत्, नापि सत्प्रतिपक्षः प्रकरणचिन्ताहेतोः स्थाणु पुरुष विशेणानुपलब्धेरिव हेतुत्वेनानभिधानात् नापि परमाण्वनित्यतायामिव मूर्तत्वमप्रयोजकमिदं साधनं रचना विशेषाणाकर्तृव्यापार साध्यत्वावधारणा, यथा धूमस्य ज्वलनाधीनात्मलाभौ ज्ञप्तिस्तु धूमादग्नेस्तथैहकर्त्रधीना रचनानामभिनिर्वृतिः प्रतीतिस्तु ताभ्यः

१. शुष्य० ३१/९.
२. न्या०म०, पृ० २१३.
३. के०ए०, पृ० २२४.

कर्तुरिति, तस्मात्प्रयोजक एवायं हेतु रितिः।[१]

एतदनुमानानुगुणनि च सूत्राणि —

[२]बुद्धिपूर्वावाक्यकृति नेदे।

[३]ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम्।

[४]तद्भवचना दाम्नायस्य प्रामाण्यम्।

[५]मन्त्रायुर्वेद प्रामाण्येवच्च तत्प्रामाण्यमाप्त प्रामाण्यात् इति।

एवं ब्राह्मण ग्रन्थेषु ऐतरेयम् शाङ्खायनम् तैत्तिरीयम् काठकम् वाजसनेयिनम् इत्यादयो वादास्तदनुसारेणेवाद्यत्वेऽपिदृश्यन्ते तत्तन्नाम्ना ग्रन्थानां नामानि अतः कथं वेदानामपौरुषेयत्वमपि तु प्रबलैरुक्तैः प्रमाणैः पौरुषेयत्वस्यैव सिद्धिरिति।

तदेतत् सर्वमसमीचीनम् —

पूर्वानुपूर्वी सापेक्षरूपेव वेदवाक्यरचनाईश्वरेण कृता, अतः परमेश्वर बुद्धिपूर्वकत्वेऽपि पौरुषेयत्वम्, अद्यत्वेऽपि प्रतिकल्पमीश्वरेणपूर्वानुपूर्वीसव्यपेक्षा एव वेदवाक्यरचना कृता, स च वेद अनादिसिद्धस्तस्यैव पूर्व-पूर्व कल्प सदृशानुपूर्वीरूपेणैवोपदेशः कृतस्तावतैव पौरुषेयत्व सिद्धिः पराकृताभवति।

---

१. न्या० मंजरी, पृ० २१४.
२. वे०सू० ६/१/१.
३. वे०सू० ६/१/२.
४. वे०सू० १/१/३.
५. न्या०सू० २/१/१२.

कर्तुरिति, तस्मात्प्रयोजक एवायं हेतु रितिः ।[१]

एतदनुमानानुगुणनि च सूत्राणि —

[२]बुद्धिपूर्वावाक्यकृति नेदे ।

[३]ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम् ।

[४]तद्धवंचना दाम्नायस्य प्रामाण्यम् ।

[५]मन्त्रायुर्वेद प्रामाण्येवच्च तत्प्रामाण्यमाप्त प्रामाण्यात् इति ।

एवं ब्राह्मण ग्रन्थेषु ऐतरेयम् शाङ्खायनम् तैत्तिरीयम् काठकम् वाजसनेयिनम् इत्यादयो वादास्तदनुसारेणेवाद्यत्वेऽपिदृश्यन्ते तत्तन्नाम्ना ग्रन्थानां नामानि अतः कथं वेदानामपौरुषेयत्वमपि तु प्रबलैरुक्तैः प्रमाणैः पौरुषेयत्वस्यैव सिद्धिरिति ।

तदेतत् सर्वमसमीचीनम् —

पूर्वानुपूर्वी सापेक्षरूपेव वेदवाक्यरचनाईश्वरेण कृता, अतः परमेश्वर बुद्धिपूर्वकत्वेऽपि पौरुषेयत्वम्, अद्यत्वेऽपि प्रतिकल्पमीश्वरेणपूर्वानुपूर्वीसव्यपेक्षा एव वेदवाक्यरचना कृता, स च वेद अनादिसिद्धस्तस्यैव पूर्व-पूर्व कल्प सदृशानुपूर्वीरूपेणैवोपदेशः कृतस्तावतैव पौरुषेयत्वं सिद्धिः पराकृताभवति ।

---

१. न्या० मंजरी, पृ० २१४.
२. वे०सू० ६/१/१.
३. वे०सू० ६/१/२.
४. वे०सू० १/१/३.
५. न्या०सू० २/१/१२.

एवं पुरुषाद्युत्पत्तिमत्त्वं तु वेदानामस्त्येव तेषामाकाशवन्नित्यत्वेन सर्वगतत्वेन कालतौ देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारण प्रतिपक्तिक्रम विशिष्टानां पूर्वपूर्व क्रमानुस्मृति निमित्त तत्तत्सदृशोन्तर क्रमवतां वेदशब्द-वाच्यानां साम्प्रतमपिपुरुषाधीनोत्पत्ति मतयासर्गसमयेऽपि श्रुत्यातथात्वस्य प्रतिपादयितुमुचितत्वात् देवाधिकरण न्यायेन प्रमाणान्तर प्राप्तिविरोधयो सतोऽन्य पराणामपि स्वार्थेप्रामाण्योपपत्ते अनमेवरीत्या पुरुषप्रणीतत्व साधकमनुमानं निरस्तं वेदितव्यम्।

एतदुपोद्बलकं च वाक्यम् —

**श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषुश्रुतम्।**

**मानान्तरोपलब्धेऽर्थेरचना तु न मीयते ।।** इति।

पुनश्चपूर्वोदाहृत् सूत्रवाक्यानामभिप्रायान्तरम्, यथा – 'वेदे' इतिविशेषणस्य परमेश्वर सिद्ध्यर्थमेवोपादानात्, गुणवद्वक्तृकत्वेन वेशेषिकैः शब्दप्रमाण्याभ्युपगमेन ईश्वरसिद्धेः प्रसङ्गो पातत्वात्।

अपि च —

'तद्वचनादाम्नायस्य प्रामाण्यम्' इति सूत्रे ईश्वरवचनादेव-आम्नायस्य प्रामाप्यमिति कण्ठत एवोक्तैः तत्पदस्य च नान्यार्थकता, अप्रकृत-त्वात् न चात्रेश्वर अप्रकृतः, तस्य प्रकृतत्वात् ऊतत्सदिति। निर्देशो ब्रह्मणस्त्रिविधःस्मृतः इत्यत्र सवितृदेवता प्रतिपादकस्य ब्राह्मणानांसर्वस्वभूतस्य गायत्रीच्छन्दस्कस्य। मन्त्रस्याप्यारम्भ एतच्छब्दादेवेति तस्येश्वरवरता स्फुटैव एवं तत्त्वमसि इत्यत्र तच्छब्दस्येश्वर परता तु सर्वे वेदान्तवादिभिः स्वीक्रियते।

अतीन्द्रिय ज्ञानासंभवेना लौकिकसाध्यसाधनबोधकवाक्यात्मकेषु वेदेषु ब्राह्मणगतदेवादि संज्ञासु च पुरुष बुद्धिपूर्वकत्व न संभवति संभवे तु बौद्धादि वाक्यानामपि प्रामाण्यां पत्तेः यदि च तैत्तिरीयं काठकादि संज्ञादशनेन तत्र पुरुषसम्बन्धः साध्यते तदाऽन्यत्रापि तत्संभवत्येव 'माघ' काव्यम् इत्यादौ तत्र च तत्संज्ञा संग्रह कर्तृत्वेन "शिशुपाल वध" काव्यस्य माघत्वमिति तदा 'समाख्या प्रवचनात्' इति सूत्ररीत्या प्रवचनेन एतरेय "काठक" इत्यादि संज्ञाया अपि उपपत्तिः संभवत्येवेति को विवादः। नापि च ऋषीणां पुराणत्व नवीनत्वप्रवादः मन्त्रेष्वपि 'अग्निपूर्वेभिर्ऋषिभिः स हत्यो नूतनैरुत'[२] इति पुराणत्व नवीनत्वादि श्रवणा विशेषत् द्रष्टॄणां पुराणत्वादिना मन्त्र ब्राह्मणेष्वपि पुराणत्वाद्युपचार संभावत्, ऋषीणामेवान्योन्यापेक्षयाप्राचीनत्व नवीनत्वादिकं संगच्छते। वेदवाक्यानां प्रथमोच्चारणसिद्ध्या तल्लक्षणनिर्माणापेक्षया-प्राचीनत्व नवीनत्वासिद्धेः, अस्मदाद्युच्चारणपेक्षया तु अल्पकालव्यवह्नितानां नवीनत्वम् अधिक काल व्यवह्नितायान्तुप्राचीनत्वम्।

अपि च वेदे लङादीनां काल सामान्यमपेक्ष्य विधानं दृश्यते। अतो भूताद्यतन परोक्षार्थेष्वपि लुङ्लकारस्य प्रयोगः यथा अभून्नृपो विवुधसखः व्यातेने किरणावलीमुदयनः इत्यादौ परोक्षाभावेऽपि लिट्प्रयोगः, एवं वारिद-स्तृप्तिमाप्नोति न लरोवर्तमानकालमर्थः वारिक्षनाव्यवहितोवरक्षणे तृप्तेर-दर्शनात् अतो वारिदाता तज्जन्यफलेन तृप्तिरूपेण युज्यते कर्मफलपरिकात्मके उत्तरकाले इति अतस्तृप्ति जलदानयोः कार्यकारणभावबोधने वाक्यास्य तात्पर्यात्माघमासेऽपि शरदि पुष्पन्ति सप्तच्छदाः इति लट् प्रयोगः, अतएव छन्दसिलुङ्लङ्लिटः इति, येष्वर्थविशेषष्विमेविहितास्तेभ्यो भिन्नेः काल

सामान्ये छन्दसि भवन्ति। 'देवो देवेभि रागमत्' 'शङ्कलाङ्गकोऽकरत्' ''इदं तेभ्यो करन्नमः'' अग्निमद्य होतारं वृणीतायं यजमानः अद्याममार इत्याद्यनेकानि भवन्त्युदाहरणानि।

एतेन स्पष्टमिदं भूतकालबोधकानां लुङ्ादीनां विषये विशेषतो-निर्दिशति पाणिनिरपि यतो ह्येषां वेद रहित कालोऽपि सन्धिद्येत भूतकालार्थत्वे, यंदपेवय वेदात्पूर्वकालौ भूतकालत्वेन व्यपदिश्येत। निष्ठाप्रत्य 'अग्रे' 'पुरा' पूर्वादि शब्दानां वेदे कालसामान्यमेवार्थः वेदोक्तकृतेष्वेवान्योन्यापेक्षया पूर्वकालो वाऽर्थः एतेषान्न सामान्यतः। प्रातिशाख्ये लोकवाक्यानामर्थपूर्वकं निर्माणमुक्तं ''लौकिकानामर्थपूर्वकत्वात्'' इत्यादिना न वेद वाक्यानाम वेद वाक्येषु तु शब्दपूर्वकत्वमर्थस्योक्तम् —

'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षनुमानाभ्याम्' इति।

अतः प्रभवात्[१] अत एवहिं वैदिकाच्छब्दाद् देवादिकं जगत् प्रभवति इत्यादिभिस्तत्सिद्धान्तस्य प्रसाधितत्वात्, अतः पूर्वदर्शितदिशा 'काठकम्' 'कालापकम्' इत्यादि समाख्यायाः 'आस्थाप्रवचनात्' इति सूत्रेण महर्षिणा जैमिनिनैवप्रवचनेनोपपत्तिः कृतेति प्रदर्शितेव। अतो वाक्य रचनानुपपत्त्या वाक्यत्व हेतुना सकर्तृकत्व साधनाय प्रयुक्तमनुमान दूषितं वेदितव्यम्, तत्र वाक्यत्वस्यान्यथाप्युपपन्नत्वादितिविस्तरेणवेदितम्, अतः सो हेतु प्रयोजक इति।

---

१. शा०भा० ब्रह्म०सू० १/३/२८.

अपि च—

**न कश्चिद् वेदकर्ता स्याद् वेदं स्मृत्वा चतुर्मुखः ।**

**तथैव धर्मान स्मरति मनुः कल्पान्तरान्तरे ।।** [१]

मत्स्यपुराणोल्लिखितत्वेनोद्धृतः —

**अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।**

**व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ।।** [२]

अतः सिद्धम् वेदानामपौरुषेयत्वम् ।

**वेदानां नित्यत्वम् –**

अतएव च नित्यत्वमपि तच्च ध्वंसभिन्नत्वेसति[३] ध्वंसाप्रतियोगित्वम् परम्परारूपाध्ययन परम्पराहि ध्वंसाप्रतियोगिनो प्रतियोगित्वे तस्याविच्छेदापातात् ध्वंसेऽति व्याप्ति वारकं सत्यन्तं दलम्, परम्पराया नित्यत्वसाधक चानुमान मुपन्यस्तं श्लोक वार्तिके —

**वेदस्याध्ययनं सर्व गुर्वध्ययनपूर्वकम् ।**

**वेदाध्ययनरूपत्वादधुनाध्ययनं यथेति ।।** [४]

**न चैवम संभवो वेदस्यानित्यत्व प्रतिपादक प्रमाणानामुपलब्धेः यथा तेन प्रोक्तम् इति सूत्रभाष्ये महाभाष्य कर्तृभिः "ग्रामे-ग्रामे काठकं**

---

१. पराशर०स्मृ०आ०का०श्लोक २१.
२. वे०स्व०वि०, पृ० ६६.
३. तर्कसंग्रह पद०, पृ० ३.
४. चित्सुखी, पृ० २७०.

कालापकं प्रोच्यते न तत्र प्रत्ययोदृश्यते'' इत्यादिना प्रवचनमूलकं समाधानं निराकृतम्। पुनरग्रे च 'कृतेग्रन्थे' इति सूत्रेणैव काठकादि पदानां सिद्धिमुपदर्शयता तेनेव 'ननु चोक्तं नहि छन्दांसि' इति शङ्कित्वा 'यद्यप्यर्थोनित्यः' यात्वसो वर्णानुपूर्वी सा अनित्या, तद्भेदाच्चे तद्भवति 'काठकम्' 'कालापकम्' 'मोदाकम' पेप्पलादभे'' इति समादधतानित्यमर्थमुपलभ्य शब्दसमूहरूपा मन्त्रा ऋषिभिर्निर्मिता इति सिद्धान्तः स्थिरीकृतः। महाप्रलयादिषु वर्णानुपूर्वाविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयात् वेदार्थ स्मृत्वा शब्दरचनांविद्धति इति कैयटः। एतावताचांशेन वेदस्य नित्यत्व मंशेनचानित्यत्वमिति सिद्धान्ते नागेशस्यादि सम्मतिरस्तीति कथं भवद्भिर्महता प्रयासेन वेदस्य नित्यत्व साधनाय प्रपत्यत इति वाच्यम्।

महाभाष्यस्य तात्पर्या नव बोधात्, एवं हि महाभाष्य संमतः सिद्धान्तः, वर्णानां तावन्नित्यत्वे नास्ति विवादः, तेषां नित्यत्वेऽपि तद्गतानुपूर्वीणामनित्यत्वं न प्रतिहतम्, तेन च न पौरुषेयत्वापातः, आनुपूर्व्यानियतत्वात् यत्र हि नियतत्वं तत्र पुरुष प्रयत्नसाध्यत्वं, तस्यानित्यत्व व्याप्तिमत्त्वमिति स्थिते तस्या एवान्नित्यत्वं सिद्ध्यति न वेदस्य, वर्णानुपूर्वी खलु आम्नाये नियता अस्यवामदेवशब्दास्येति महाभाष्यानुरोधात्।

**अयमभिप्रायः –**

यथा नर्तकी स्व गात्र विक्षेपादिकं तथा करोति यथा तस्याः शिक्षकः करोति, तथैवाध्येतारः शिष्या अध्यापयितृणां गुरुणां पवाक्याद्यानुपूर्वी निर्माणमनुकुर्वन्ति। दृष्टान्ते यथा नर्तक गात्रविक्षेपाद भिन्न एव

नर्तकीगात्रविक्षेपः विक्षेपत्वेनोभयसाम्येऽपि नर्तकीगात्रविक्षेपस्य न नर्तक-गात्रविक्षेपतुल्यता, तत्र भावेन किञ्चिन्मधुनाधिक्यसंभवात् अतोऽनुकरणमात्रम्। तद् वदत्रापि अध्यापयितृनिर्मितया आनुपूर्व्याभिन्नेवा शिष्यनिर्मिताऽनुपूर्वी। एवं रूपेणाऽऽनुपूर्व्या अनित्यत्वं वर्णानित्यत्व वादिनां तन्नित्यत्व वादिना च मते समानम्, केवलं पुरुष स्वातन्त्र्यतद्स्वातन्त्र्ययोरेवमतभेदः। वैदिकेतरेरानु-पूर्वीनिर्माणे पुरुषस्वातन्त्र्यं स्वीक्रियते, वैदिकेस्तु वेदे आनुपूर्व्या निर्माणेऽपि पुरुषस्यास्वातन्त्र्यमेवेष्यते उक्तं हि भट्टपदिः —

**''यत्नतः प्रतिषेव्या नः पुरुषाणां स्वतन्त्रता''** इति।

सृष्टिप्रलय स्वीकर्तृभिर्वेदान्तिभिरपि पुरुषतन्त्र्यमभ्युपगम्यत एव, एतस्यार्थस्य च प्रतिपादकानि ब्रह्माणनि —

'स यथाऽऽद्रेधाग्नेरभ्याहिता पृथकग्धूमा विनिश्चरन्त्येवं वा अरऽस्य महतो भूतस्य निःश्वसितमेतघृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्धस्यै वैतानि निःश्वसितानि' इति ईश्वर निर्मिताष्यानुपूर्वीपूर्वकल्पानुसारिणी एव भवति, अतएवा नित्यापि सा निर्यतव, इदमेव वेदानां नित्यत्वम्। एवं हि 'या त्वासो वर्णानुपूर्वी साऽनित्या इति महाभाष्यस्य कुत्र कथं विरोधः? वर्णाश्चनित्या अतस्तेषां विभूतां देशतः कालतो वा पौवापर्य नास्ति, उच्चारणाभिव्यङ्ग्यानां वर्ण-व्यक्तीनामनित्यघ्त्व मत एव तेषां देशतः कालतश्च परिच्छेदोऽस्त्येवाताऽस्ति पौर्वापर्यमपि, अत आनुपूर्व्या अनित्यत्वे विरोधा भावः।

वृत्तानुकरणवद् गुरु शिष्याद्युच्चारयितृणां भेदाभ्युपगमेऽपि साजात्य

मस्त्येव उच्चारणनिष्ट मन्योन्य साजात्यचैकानुपूर्वीक वर्णसमुदाय व्यापकत्वम्। एव च काठकादिषु कठादिकृतत्वेऽपि प्रवचन कर्तृत्वमेव फलतः प्राप्तम्, तत्र प्रथमोच्चारणस्यासिद्धत्वात्, वेदे सर्वेषामेवोच्चारणानां पूर्वपूर्वोच्चारण सपिदात्वेन-स्वातन्त्र्याऽपौरुषेत्वसिद्धिः स्फुटतरा, तथैव —

**यो ब्रह्माणं विदधाति पूर्वयो वे वेदांश्चप्रहिणोति तस्मै ।**
**तं ह देवमात्मबुद्धि प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।।**[१]

इत्यादिश्रुतिभिः प्रवाहनित्यत्व सिद्धिरपीतिदिक्।

**वेदानां स्वतः प्रामाण्यम् –**

अथ प्रमाणानां प्रामाण्यादेव प्रमेयसिद्धिरिति हि स्थितिः, अतः प्रथमं तावत् प्रामाण्यस्वतस्त्व परत्वस्त्वमेवावलम्ब्यविचारः प्रवर्तनीयः दार्शनिकेषु मीमांसकं अग्रेसरा प्रामाण्यस्वतस्त्वमङ्गीकुर्वन्ति, वेदश्च प्रमाणेषु मूर्धन्यः, अतस्तत्सम्बन्धे विचार परम आवश्यक इति हेतोरेव तन्निरूपणम् तत्र परतः प्रमाण्यवादिनो नैयायिकाः तत्रास्ति च विप्रतिपतिः —

ज्ञानप्रामाण्यं तदप्रामाण्याग्राहक यावज्ज्ञानग्राहक सामग्रीग्राह्यं न वा अत्रविधिकोटिः स्वतस्त्वम् निषेधकोटिः परतस्त्वम्।[२]

प्रथमकोटिमीमांसकानाम् द्वितीयकोटिश्च नैयायिकानाम् गुरुमते[३] सर्वमेव घटादि ज्ञानं घटादि ज्ञानविषयकं 'अयं घटः घटज्ञानवानहम्' इत्या-

---

१. श्वे०उप०, ६/१८.
२. तर्क०सं०दी०, पृ० १७८.
३. तर्क०सं०दी०विवृति, पृ० १७८.

कारक समूहालम्बनात्मकं भवतीति घटादिज्ञानस्यैव घटादिज्ञानग्राहक स्वरूपतया घटादिज्ञान जनकसामग्री ग्राह्यत्वमेव प्रमात्वम् मुसारिमित्रमते घटादि ज्ञानोत्तर कालीन घटज्ञानवानहम् "घटं जानामि वा" इत्याकारकानुव्यवसायस्यैव घटादिज्ञानग्रहरूपतया तज्जनक लौकिक मानससामग्री ग्राह्यंप्रमात्वं बोध्यम्। भट्टमते च ज्ञानस्यातीन्द्रियतया तज्जन्य ज्ञाततारूपकार्येण 'इयं ज्ञातता घटादि ज्ञानजन्या' इत्याकारकानुमिति जननात् तादृशानुमितेरेव घटादिज्ञान ग्रह-रूपतया तज्जनक परामर्शादि घटितसामग्री ग्राह्यमेव प्रमात्वमित्यवधेयम् वस्तुतस्तद् प्रामाण्यग्राहकेत्यस्य तज्ज्ञान प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च या भट्टमत सिद्धा सामग्री तदन्यत्वमर्थः, तेन 'घटज्ञानं गुणः' इत्याकारक ज्ञानग्राहकशाब्दसामग्र्या प्रमात्वा ग्रहेऽपि न बाध इति संक्षेपः।

प्रमायाः[१] स्वतस्त्व च विज्ञान सामग्रीजन्यत्वेसति तदतिरिक्त हेत्वजन्यत्वमेव। न चेश्वरज्ञानेऽव्याप्तिः, तस्याजन्यत्वादिति वाच्यम् विज्ञान सामग्री जन्यत्वविशिष्ट तदतिरिक्त सामग्री जनत्वाभाववत्त्वस्य सत्त्वात्, अप्रमासु विज्ञान सामग्री जन्यत्वेसति तदतिरिक्त सामग्री जन्यत्वं भवति तदत्यन्ता-भाववत्त्व प्रमासु भवत्यत एव नातिव्याप्तिरपि। अस्तिचानुमानं प्रमाणम् प्रमा विज्ञानसामग्रीजन्यत्वेसत्यतिरिक्तजन्या न भवति अप्रमातिरिक्तत्वात् पटादिवत्, न चात्र ज्ञानत्वानधिकरणत्वस्योपधित्वम्, ईश्वरज्ञाने साव्याव्याप्तेः। नापि ज्ञानसामग्र्यजन्यत्वस्योपाधित्वं यज्ज्ञानसामग्रीजन्यं यत्तृत्वे सत्यतिरिक्त जन्यमप्रमाणवदिति व्यतिरिक्त व्याप्ता व प्रमात्वस्यैवोपाधित्वात् विज्ञान-

---

१. चित्सुखी, पृ० २१८.

सामग्रीमात्रदेव प्रमोत्पत्ति संभवे तदतिरिक्तस्य गुणस्यदोषाभावस्य वा हेतुत्वे गोरवप्रसंगो विपक्षे बाधकस्तर्कः। न च प्रमा विज्ञान हेत्वतिरिक्त हेत्वाधीनां कार्यत्वा त्पटवदिति परतस्त्व प्रयोगोऽपि संभवत्येवेति वाच्यम्।

प्रमादोषव्यतिरिक्तज्ञान हेत्वतिरिक्तजन्या न भवति ज्ञानत्वाद-प्रभावदित्यनेन सत्प्रतिपक्ष संभवात् नचाप्रमाज्ञाने तत्प्रसक्तिः प्रयोजकाभावात् दोषासहकृत ज्ञानसामग्र्याः प्रमा प्रयोजकत्वेनाप्रमायां दोष सहकृत तज्जन्यत्वेन तदसंभवात्। न च तर्हि दोषाभावस्य प्रमात्व प्रयोजकत्वमिति वाच्यम् अन्वय व्यतिरेकयोर्विरोध्य प्रमा प्रतिबन्धकत्वे न विपक्षीणत्वात्। न च संस्कार-स्यानुभव नाशकत्व स्मृति हेतुत्वयोर्दर्शनेन दोषाभावस्याप्यप्रभा प्रतिबन्ध-कत्वं प्रमा हेतुत्वञ्च किं न स्यादिति वाच्यम् तत्र स्मृतेः कारणान्तरसंभवेन तत्त्वेऽपिप्रकृते प्रमा सामग्री सत्त्वेन वैषम्यात् तस्मात् प्रमा विज्ञानसामग्री मात्रदेव जायत इति सिद्धम्।

एवं वेदे संशय विपर्यया जनकत्वात् बोधकत्वाबाधका-भावाच्चानधिगतासन्दिग्धावाधितार्थविषयज्ञानजनकत्वदर्शनेन अप्रामाण्य-कारणाभावात्स्वाभाविकं प्रामाण्यमेव। प्रमाणन्तरमूलाभावोभूषणमेव न दूषणम्। न्यायकणिकायां वाचस्पति मिश्राः —

"ननु बाधकाकारणदोषाभ्यामप्रामाण्यज्ञानात् तद्भाव ग्रहापेक्ष प्रामाण्य निश्चयेन न स्वतः प्रमाण्यमिति चेन्नएकहेतुत्वकल्पनायां कार्योत्पत्ता-वनेक हेतुत्वकल्पनानुपपत्तेः, बाधस्य कारणदोष ग्रहणस्य चाप्रामाण्य निश्चय हेतुभावमात्रेण प्रामाण्योपहन्तुत्वेन तद्भावे बोधमात्रादेव प्रामाण्यापपत्तौ न

तद्भावोऽपेक्षणीयः स च सत्यामाशङ्कायाम् सा च यादृशे विषये दृष्टचरी तादृशे एव न सर्वत्र, तस्मात् स्वतः एव प्रामाणानां प्रामाण्यम्, वह्नेर्दहन सामर्थ्यवत्। तदेव चोक्तं भट्टपादैः 'स्वतः सर्वप्रमाणान्यं प्रामाण्यमिति गृह्यताम्'[१] इत्यादिः। अत एव कारण गुण संवाद्यर्थक्रियाज्ञानाधीनत्वेसति कारण दोष बाधक दोषवर्जितत्वेसति चानधिगता बाधितार्थ बोधजनकत्वमेव प्रामाण्यस्य स्वतस्त्वमुपपन्नं भवति, अप्रामाण्यस्यापि परतस्त्वं बाधकं ज्ञानकारण दोष-विसंवादि ज्ञानाधीनत्वेन सिद्धमित्यतो वेदानां स्वतः प्रमाणत्वे न किंचिद् बाधकमिति।

**स्वरूपलक्षणयोपभेदः –**

वेदस्वरूप निरूपण प्रसङ्गे वेदानां शब्दार्थनिर्वधनमारभ्य वेद-शब्दस्य प्रवृत्ति निमित्ततताप्युपदर्शिता, इतश्च लक्षणादि निरूपणमवशिष्टमिति तदर्थमयमारंभः लक्षणञ्च किं स्वरूपाद् भिन्नमुताभिन्नमितीयं जिज्ञासा स्वर-सतएवोद् भवति, युक्तापीपं जिज्ञासा, तां विना वस्तु निरूपणाय प्रवृत्त्यनुपपत्ते रतो वस्तु स्वरूपर्निधारणार्थ स्वरूपार्थज्ञानमावश्यकमिति तन्निरूप्यते —

स्वरूपं[२] लक्षण ग्रहोपयोगि अनुमिति करणतावच्छेदकरूपम्-'इतरभेदानुमापकरूपम्' इत्येवं विधयालक्षणन्तु स्वरूपस्य लक्षणस्य च पृथग्-पृथग् निर्वचन दर्शनात्, एवं लक्षण निरुक्तिः प्रदर्शिता —

---

१. वेदस्व वि०, पृ० ३०२.
२. अनुमानगादाधरी अनुमिति प्र०, पृ० २१.

अतिव्याप्त्यादि रहितो व्यावर्तकोधर्मीलक्षणमिति न्यायवैशेषिक मीमांसकाः। ब्रह्मपद व्युत्पतिवलेन यद् विशेषतः प्रतिपन्नं किञ्चिन्महदस्ति तत्सत्यं ज्ञानमनन्तमनृत जड्परिच्छेद विरोधित्वरूपमिति विशेषतः प्रति-पत्तव्यमिति विशेषावगति शेष भूतं लक्षणम् प्रमितिस्तु प्रमाणादेवेति। तार्किकाः पुनर्लक्षणं केवलव्यतिरेक्यनुमानमाचक्षते तदा लक्षणादेव स्वभाव विशेष प्रमितिः, यथा गुणवद् द्रव्यमिति लक्षणाद् गुणाश्रयत्वयोग्य स्वभावविशेषस्य प्रमितिः सामान्य प्रतिपन्नस्य द्रव्यपक्षाभिधेयस्य भवति। यद्वा व्यवहारसिद्धिः फलं गुणवद् द्रव्यमिति व्यवहर्तव्यं गुणवत्त्वान्न यदेवं न तदेवं यथारूपम् तथा सत्यत्वादिमदब्रह्मेति व्यवहर्तव्यं सत्यत्वादिभावान्न यदेवं यथाघटं इति इत्यादिना। सत्यं ज्ञानं मनन्तं ब्रह्म इत्यस्य शांकरभाष्यं व्याकुर्वता आचार्येण।

स्वयं शङ्करेणापि मन्दमति व्युत्पादनाय सत्यादिपदानां कृत्यानि प्रदर्शयता तत्तत्पदानां व्याकृतिरपि प्रदर्शिता यथा —

सत्यादीनि त्रीणि[१] विशेषणार्थानि पदानि विशेषेस्य ब्रह्मणः, विशेष्यं ब्रह्म विवक्षितत्वाद् वेद्यतया विशेषण विशेष्यत्वादेव सत्यादीन्येक विभक्तयन्तानि पदानि समानाधिकरणानि इत्यादिना आपातप्रतिपन्नं इति विशेषण विशेष्यभावं आनन्तर्यमचोदना।[२] गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादि'ति सिद्धान्तरीत्या निर्धार्य तत्रैव शास्त्रार्थोपन्यासपुरस्सरं तथापि तदाभासवाचकेन बुद्धिधर्म विषयेण ज्ञानशब्देन तल्लक्ष्यते न तूच्यते, शब्दप्रवृत्ति हेतु जात्यादि

---

१. शां०भा०तै०उ० सत्यंज्ञानमित्यादि वाक्यस्य।
२. पू०मी०सू०, ३/१/२४.

धर्मरहितत्वात् तथा शब्देनापि, सर्वविशेष प्रत्यस्तमित स्वरूपत्वाद् ब्रह्मणो ब्रह्मसत्तासामान्य विषयेण सत्य शब्देन लक्ष्यते सत्यं ब्रह्मेति न तु न सत्यशब्दवाच्यमेव ब्रह्म। एवं सत्यादिशब्दाइतरेतर सन्निधाबन्धोन्यनियम्य नियामकाः सन्तः सत्यादिशब्द वाच्यातन्निवर्तका ब्रह्मणो लक्षणार्थश्च भवन्ति इत्यादिना।

एवं सत्यादिशब्दा इत्यादिभाष्यं स्फोरयन् अभिप्रायं स्फुटी करोति —

ज्ञानेनविशेषणात्सत्य शब्दो न जडे कारणे वर्तते, सत्येन विशेषणाज्ज्ञान शब्दो न विषय सापेक्षेज्ञानेन वर्तते, ज्ञानेन विशेषणादनन्त शब्दो न ज्ञातृव्यतिरिक्ते वर्तते। ततश्च सत्यादि शब्देन यल्लौकिक वाच्यं तद्विलक्षणेन भवितव्यमिति संभावयन्तः सकल लौकिकाध्यासाधिष्ठानं ब्रह्मत्वेन लक्षयन्तीत्यर्थः सिद्धान्तमुखेन प्रतिपादयन् इत्यादितोत्तर व्यावृत्त्यर्थ लक्षणं समतं वेदान्तवादिनामपीत्यन्येषान्तदर्थमिति तु कैमुतिक न्यायसिद्धम्। कैमुतिक न्यायस्यायमभिप्रायः 'केनचिद् भिक्षुणे कस्मिन् दारुपात्रे अपुपारक्षिताः रात्रौ च तत्रैव स्थापिताः, प्रातःकाले च यदोत्थायपश्यति तदाभूषकैर्भक्षितं पुनः कार्यनुपयोगि दारुपात्रमपश्यत्, दारुपात्रमेवभिक्षतमिति तत्रस्थस्यापूपस्य भक्षणन्तु स्वतः सिद्धमेव तद्वत् प्रमाणैर्वस्तुपरिच्छेदार्थ प्रवृत्तस्य वैशेषिकादि शास्त्रस्य तु लक्षणमितर भेद साधनार्थमिति स्वत एव सिद्धमितीत्यर्थः।

पुनस्तार्किकसमयानुसारि लक्षणं किमिति जिज्ञासायामुच्यते अव्याप्त्यति व्याप्त्यसंभवरूपदोषत्रयरहित धर्मो लक्षणम्, लक्ष्यतावच्छेदक

सामानाधिकरणात्यन्ताभाव प्रतियोगित्वम् व्याप्तिः[१], लक्ष्यतावच्छेदकावच्छिन्न प्रतियोगिताक भेद सामानाधिकरण्य मतिव्याप्तिः, असंभवस्तु लक्ष्यतावच्छेदक-व्यापकीभूताभाव प्रतियोगित्व रूपः स च धर्म असाधारणरूपः, अतएवोक्तम् 'असाधारण[२] धर्मो लक्षणम्' असाधारणत्व च लक्ष्यतावच्छेदकसमनियतत्वमिति।

अत्रेदं पृच्छयते ............... असाधारणत्व घटकं समानियतत्वं किमिति, असाधारणत्वज्ञानं समनियतत्वज्ञानसाध्यं लक्षण चासाधारण ज्ञान साध्यमिति समनियतत्वस्याज्ञाने लक्षणवत्वस्यैवा निरुक्तेः, अतः समनियतत्व-मित्थं निर्वक्तव्यम् —

स्वाधिकरण वृत्ति भेद प्रतियोगितानवच्छेदकीभूतं[३] यल्लक्ष्यता-वच्छेदकं तदधिकरणवृत्ति भेद प्रतियोगितानवच्छेदकत्वरूपमेव समनियतत्वम्। स्वं लक्षणत्वेनाभिमतो धर्मविशेषः, यथा भवति हि सास्नावत्वं गोप्तामान्ध लक्षणम्, सास्नावत्त्वाधिकरणवृत्ति भेद प्रतियोगितानवच्छेदकीभूतं यद्गीत्वं तदधिकरणवृत्ति भेदः प्रतियोगितानवच्छेदकत्वस्य तत्र सत्वात्, सास्नावति-गोभेदस्य गोत्ववति च सास्नावतो भेदस्याऽसत्वात्, न वा कपिलत्वादिकं तथा कपिल गावि गो भेदा सत्त्वेऽपि लक्ष्यतावच्छेदकगोत्ववति शुक्लगवि कपिलभेदसत्त्वेन कपिलत्वस्य लक्ष्यतावच्छेदक गोत्वाधिकरणवृत्ति भेद प्रतियोगितावच्छेदकत्वात्, एवं शृङ्गित्वतिमहिषे गोभेदे सत्त्वेन गौत्व रूप

१. तर्क०सं०न्या०, पृ० ५.
२. तदेव, पृ० २१.
३. तदेव, पृ० २१.

लक्ष्यतावच्छेदकस्य शृङ्गित्वाधिकरणवृत्ति भेद प्रतियोगितावच्छेदकत्वेन शृङ्गित्वस्य एक शपत्ववति गौ भेदस्य, गौत्ववतिचैकशपभेदस्य वर्तमानतया एकशपत्वस्य गोत्वस्य च परस्पराधिकरणवृत्तिभेद प्रतियोगितावच्छेदकत्वात् एक शपवत्वस्यापि न गौसामान्य लक्षणत्वं संभवतीति बोध्यम्, अर्नयवरीत्या लक्षणात्मक धर्मे निरुक्तसमनियतत्वं संलापनीयम् ।

इदं पुनरिहावधेयम् – लक्ष्यतावच्छेदके तादृश प्रतियोगितानवच्छेदकत्वदलमतिष्याप्त्यसंभव दोष शून्यता प्रयोजकम्, स्वस्मिंश्च तादृश प्रतियोगिताऽनवच्छेदकत्वदलमव्याप्त्यादि शून्यता प्रयोजकम् अव्याप्तिमतो धर्मस्य लक्षणतयेतर भेदानुमापकत्वे तस्य भागासिद्धरूप हेत्वाभासत्वम्, अतिव्याप्तिमतो व्यभिचारित्वम्, असंभववतश्च स्वरूपासिद्धत्वम् । लक्ष्यतावच्छेदक समनियतत्वस्य लक्षणत्वे लक्ष्येतर भेदे लक्ष्यनिष्ठाभिधेयत्वे च तस्य लक्षणस्य सत्त्वमिति तयोरपि लक्ष्यत्वापत्तिः स्यादिति तद् वारणाय निरुक्त समनियतत्वे इत्येतरभेदवत्वं लक्ष्य निष्ठाभिधेयत्वादि भिन्नत्व च निवेशनीयम्, तथा च लक्ष्येतरभेदभिन्नत्वेसति लक्ष्यनिष्ठाभिधेयत्वादिभिन्नत्वेचसति लक्ष्यतावच्छेदक समनियतत्वमिति लक्षणम् इदं च व्यावृतिमात्रं लक्षण प्रयोजनमित्यभिप्रेत्य, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमित्यभियुक्तोक्त्या व्यवहारस्यापि लक्षण प्रयोजनत्वे तु धर्मे व्यावृत्तिभिन्नत्वं व्यवहारभिन्नत्वं च लक्षणे नवप्रवेशनीयम् इति। तथा च केषाचिन्मते लक्षणस्योभयं प्रयोजनं, व्यावृत्ति व्यवहारश्च अन्येषां मते तु व्यावृतिमात्रं लक्षण प्रयोजनं, तदत्राप्यविशिष्टमिति व्यावहारिकसत्ताश्रयेणेव लक्षणं निवृक्तव्यं

भवति, स्वरूपापरिज्ञाने तु अनुमितिकरणतावच्छेदकाज्ञानादनुमानं एवाप्रवृत्तेः, अप्रवृत्तो अनुमानोच्छेदात्तदुच्छेदेच लोकव्यवहारोच्छेद इति लोकव्यवहार निष्पत्त्यर्थं स्वरूपरक्षार्थ च स्वरूपस्य स्वरूपज्ञानमप्यरिहार्यमतो लक्षणस्य स्वरूपस्य च पृथक्-पृथक् सत्ताऽनुभवपथमायाता एवस्वीकृताविद्वद्भिरिति ।

**वेदान्तलक्षणनिरुक्तिः प्रमाणञ्च –**

ननु वेदसत्त्वे किमानम् ? न तावत् प्रत्यक्षं तद्धिद्विविधं वाह्य-माभ्यन्तरञ्च बहिरिन्द्रिय लौकिक प्रत्यक्षं प्रतिरूपस्य कारणत्वात् शब्दादि प्रत्यक्षं प्रत्यपित्वङ्मनोयोगस्य कारणत्वमस्त्येव, रूपाभाववत्वेन न बहिरिन्द्रिय प्रत्यक्ष योग्यता वेदानां, बहिरिन्द्रिय जन्यप्रत्यक्षेऽपि विषयगतं महत्त्वम-पेक्षितमेवमालोकसंयोगश्च सर्वावयावच्छेदेनापेक्षित इति तदभावादेव न वेदानां बहिरिन्द्रिय जन्य प्रत्यक्ष विषयता, नाप्याभ्यन्तर प्रत्यक्षविषयता वेदाना मनसुखादि व्यतिरिक्तत्वात् सुखादेर्हि मानसं प्रत्यक्षं परमते, आत्मप्रत्यक्षता तु वेदान्तमतेऽपीति वेदानामतथात्वान्न वाह्यस्य नाप्याभ्यन्तरस्य प्रत्यक्षविषयता । नाप्यनुमानं वेदसत्तासाधकं तथाविधानुमान प्रयोजको हेतुरेव नास्ति, नापि शब्दः तथाविधशब्दाभावात् न चात्रप्रसिद्धः प्रत्यक्षानुमानागमेष्वान्तिमो वेदः स एव च तल्लक्षणमिति वाच्यम् मन्वादि स्मृतीनामपितथात्वेन ताष्वतिव्याप्तेः समय बलेन सम्यक् परोक्षानुभव साधनमित्येतस्यागमलक्षणस्य तास्वपि सद्भावात्, सम्यक् परोक्षानुभवसाधनमपौरुषेयत्वेन विशेषणीयमिति चेत्, वेदस्यापि परमेश्वर निर्मितत्वेनपौरुषेयत्वात् 'सहस्र शीर्षापुरुष' इत्यादि वाक्यं पौरुषेयत्वेमानमिति चेत् कर्मफलरूप शरीरधारिजीवनिर्मितत्वाभावादपौरुषेय-

त्वमिति चेत् जीव विशेषरग्निवाय्वादित्येर्वेदानामुत्पादित्वात् ऋग्वेद ।[१] 'एवाग्ने रजायत' यजुर्वेदो वायोः सामवेद आदित्यात् इत्यादि श्रुत्या ईश्वरस्याग्न्यादि प्रेरकत्वेन वेदनिर्माततृत्वम् मन्त्र ब्राह्मणात्मक शब्द राशिर्वेद इति चेत् इदृशो मन्त्र इदृशं ब्राह्मणमित्यस्याद्याप्यनिर्णीतत्वात्, तस्मान्नास्ति वेदस्य लक्षणं प्रमाणञ्च। ननु ऋग्वेदं[२] भगवोऽध्येमि यजुर्वेदंसामवेदमाथर्वणं यतुर्थम् इत्यस्ति प्रमाणमिति चेन्न तस्यापि वाक्यस्यात्माश्रयत्वेनार्थासाधकत्वात्।

आत्माश्रयस्य दोषत्व च एवस्याव्यवह्रित स्वापेक्षणरूपम् न्नेवमपि वेद प्रामाण्यसिद्ध्यधीनेश्वरसिद्धिरीश्वरसिद्ध्यधीन च वेद प्रामाण्यमित्यात्माश्रय इत्यर्थं, न च 'वेद एव[३] द्विजातीनां निश्रेयस करः परः' इति स्मृति वाक्यं प्रमाणमिति वाच्यम् तस्याप्युक्त श्रुतिमूलकत्वेनाप्रामाणात् इत्थं च प्रत्यक्षानु-मानागमानां प्रमाणानां नात्र प्रसरः, नापि च लोक प्रसिद्धिः प्रमाणम् वेदविषया तु लोक प्रसिद्धिर्नीलं नभ इति वद् सार्वजनीनापि भ्रान्तिरेव 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरितिमतम्, तस्मान्नास्ति लक्षणं प्रमाणं वा वेदविषयमिति चेत्।

नपूर्वोपदर्शितादिशाऽनुमानस्य शब्दस्य च यथा यथं प्रमाणत्वात् इहाप्युच्यतेदिङ्मात्रम् मन्त्र ब्राह्मणात्मकं तावददृष्टं लक्षणम् अत आपस्तम्ब यज्ञपरिभाषायां मन्त्र ब्राह्मणयो वेद नाम धेयम्।[४] इति

---

१. ऋ०भा०भू०, पृ० २.
२. छा०उप०, ७/१/२.
३. याज्ञवल्कय स्मृति, अ० ४०.
४. आप० ३१.

प्रमाणान्यापि यथोक्त श्रुतिस्मृतिर्लोकप्रसिद्धिरूपाणि वेद सद्भावे विलोकनीयानि यथा घटपटादि द्रव्याणां स्वप्रकाशत्वाभावेऽपि सूर्यचन्द्रादीना स्वप्रकाशत्वम विरुद्धं तथा मनुष्यादीनां स्व स्कन्धारोहासंभवेऽप्यकुण्ठित शक्तेर्वेदस्येतरवस्तु प्रतिपादकत्ववत् स्व प्रतिपादकत्वमप्यस्त्वित्युपपादित-मधस्यात्। अतएव सम्प्रदायविदोऽकुण्ठितां शक्ति वेदस्य दर्शयन्ति। चोदनाहिभूतं भविष्यं सूक्ष्मं व्यवह्नितं विप्रकृष्ट मित्येवं जातीयकमर्थ शक्नोत्यवगमयितुमिति। तथा सति वेदमूलाया: स्मृतैस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम्, वेदनं च वेदस्तच्च न सामान्यमपितु विशिष्टाधिकारिसाध्यम्। अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनात्।

**[१]प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एवं विदन्तिवेदेन तस्माद् वेदस्य वेदाता।।** इति।

अतो मुख्यो वेद शब्दार्थ अयमेव इयमेव लक्ष्यीकृत्य प्रदर्शितं वेद लक्षणम् —

[२]अनुपलभ्यमान मूलान्तरत्वे सति महाजन परिगृहीतवाक्यत्वं वेदत्वमित्याचार्येणाप्यतोऽदृष्टविषयकवाक्यत्वस्य वेदत्वे प्रसारक वाक्यस्यापि तथात्वेन तस्यापि वेदत्वापत्तिरतो न तस्य वेद लक्षणत्वम्, नाप्यदृष्टिविषय प्रमाणवाक्यत्वं वेदत्वम्, तस्यासिद्धेः मन्वादिवाक्यस्याप्य दृष्टविषयत्वात्तत्रा-तिव्याप्तेश्चात: पूर्वोक्तमेव साधु, तथा च न मन्वादिवाक्ये तस्य सत्त्वम्

---

१. वेद०स्व०वि०, पृ० ३६.
२. न्या०कु०, ५/५.

तत्रानुपलभ्यमान मूलान्तरभावात् तेषा च वेदमूलत्वेनेव प्रामाण्यात् अत एव ।

**[१]यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।**
**सः सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।।**
**सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।**
**श्रुति प्रामाण्यतो विद्वान् स्व धर्मे निविशेत वै ।।** इति ।

'श्रुतेरिवार्थ स्मृतिरन्वगच्छत्' इति चोक्तम् । अस्मदादि प्रत्यक्षादि-मूलमादाय तस्य वेदत्व वारणाय सत्यन्तम् तथात्वस्य भ्रम विप्रलिप्साजन्य वाक्यनामपीति तेषां वेदत्व वारणाय विशेष्य दलम् । नापि परम्पराया मूलत्वम्, न्याय वैशेषिकैः प्रलय स्वीकारेण तस्य जन्य द्रव्यानाधिकरणकालत्वेन, परम्परायाश्च गुणत्वात्क्रियात्वाद् वा द्रव्यमन्तरेण तयोरसत्वात् विशेष्याभावाद् विशिष्टाभाव इति प्रतीतेरिति ।

ननु वेदलक्षणमिदं[२] कथं संभवति, तत्र वाक्यत्वस्यैवायिसद्धेः, वाक्यत्वं हि विशिष्टेकार्थप्रतिपादकत्वं तस्य चात्रासिद्धिः समुदायस्या प्रतिपादिकत्वादिति । ननु समुदितानि पक्षमेव समुदायः, तत्र च प्रतिपादक-त्वमस्त्येव, अन्यथा वाक्यत्वमप्रसिद्धमेवस्यात्, प्रत्येकपदस्य वाक्यत्वाभावात् समुदायस्य चा प्रतिपादकत्वात् । किं च प्रमाणत्वस्य प्रतिपादकत्वविशेषतया तद्घटित सिद्धान्त लक्षणमपि वेदस्यायुक्तं स्यादित्य रूचे पक्षतावच्छेदक विकल्पेन वेदलक्षणं निर्दिशति शाखा समुदायत्वमेव वेदत्वमिति । तस्यापि

---

१. मनु०, २/७/८.
२. न्या०कु०, ५/५.

वेद निरुप्यत्वेनान्योन्याश्रयात्, तस्य च दोषत्वं 'मन्योन्यस्याव्यवहितोन्योन्यापेक्षित्वेने'ति।

नापि महाजनानां वेदाकरानुगतव्यवहाराद्वेदत्वं जातिः, वेददत्रीयत्वानुमापकशब्दवृत्ति जातिभिः साङ्कर्यात्, नापि स्वर्ग कामादि शब्दः स्मृत्यादो तथात्वा दतीनैतद् वाक्यत्व घटकं वेद लक्षणं साध्विति चेत्।

न तदघटितस्य वेद प्रामाण्याभ्युपगर्न्तृभिः सर्ववादिभिः स्वीकृतस्य लक्षणस्य प्रणयनात् न पूर्वोक्त दोष प्रसक्तिस्तच्च लक्षणम् —

शब्दातिरिक्तं शब्दोयजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्य प्रमिति विषयानतिरिक्तार्थको यो यस्तद्न्थत्वे सति आमुष्मिक सुखज्जनकोच्चारणकत्वेसति जन्यज्ञानाजन्यो यः प्रमाणशब्दस्तत्त्वं वेदत्वमिति लक्षणम्।[१]

अत्र व्यासादि चाक्षुषादिप्रत्यक्षादि जन्ये दृष्टार्थ के भारतायुर्वेदादिभागेऽति व्याप्ति वारणाय प्रथमं सत्यन्तम्। एव च तदुभयातिक्तं प्रमाणं चक्षुरादिरेवतज्जन्य प्रमिति विषयार्थ कतया तयोर्नातिव्याप्तिः। न च दृष्टार्थक वेदभागस्यापि लक्ष्यतया कथं तत्र लक्षण समन्वय इति वाच्यम्, अत्रार्थ पदस्य मुख्य तात्पर्य विषयत्वात्, मीमांसकमते विध्यर्थ एव मुख्य तात्पर्यविषयः न्यायमतेऽपि 'स्वार्थद्वारेवतात्पर्यें' तस्य स्वार्गादिवद् विधौ।[२] इति रीत्या विध्यर्थ एव तेषामुख्यं तात्पर्यम्। अतएव सत्यन्तेऽनतिरिक्तेति। तथा च

१. उपस्कार वै०सू०, ६/१/१.
२. न्या०कु०, ५/१६.

तेषां दृष्टार्थकत्वेऽपि नाव्याप्तिः। प्रमित्य विषयार्थकत्वमात्रोको असंभव इति जन्यान्तं प्रमिति विशेषणम्। शब्दोवजीव्यतिरिक्तेन प्रमाणेन वेदात्मक शब्देन वेदार्थस्य प्रमापणात् शब्दातिरिक्त पदस्य प्रमाणविशेषणतया निवेशः। मन्त्रावयवभूत वाक्येऽपि व्याप्ति वारणाय द्वितीयं सत्यन्तम् एव स्तोमेऽति व्याप्ति वारणाय प्रमाण शब्दनिवेशः। मन्वादिस्मृति भारताय दृष्टार्थक भागेष्वति व्याप्ति वारणायाजन्य इत्यन्तम्। यद्यपि अनन्ता वे वेदाः इति श्रुत्यनुसारेण वेदा अनन्ता एव तथापि त्रयस्त्रिंशदधिकशतीतर सहस्त्र शाखोपवृंहितो मन्त्रा ब्राह्मणात्मकोऽविच्छिन्न पारम्पर्येणाधीयमानोऽपौरुषेयः शब्दराशिरेवमानव बुद्धिगम्यो वेदः। गुरोमुर्खादनुश्रुयमाणत्वा देवान्वर्थकानुश्रवत्वमपि तस्य। शब्दज्ञानाधीन परामर्शेऽतिव्याप्ति वारणाय विशेष्यदले शब्द पदम्। अतो नास्ति वेद लक्षणस्य प्रमाणस्य चाभाव इति।

**वेदमाहात्म्यम् –**

अस्ति हि धर्मस्य मूलं वेद इति प्रख्यापयन्तो स्मृतिः वेदोऽखिलो धर्ममूलम्।[१] इत्याद्याः धर्मज्ञाने च न सर्वेषां सामान्येनाधिकार अपितु।

**अर्थ कामेष्यसक्तानां धर्मज्ञानंविधीयते ।**
**धर्मजिज्ञासमानानां प्रमाणं परम श्रुति ।।[२]**

इत्येवं विधस्याध्ययनं फलपर्यवसापि भवति तत्र व्युत्पतिरप्य-पेक्षिता सा च वेदषडङ्ग ज्ञानसहिता अन्यथा —

---

१. मनु० २/६. २. मनु० २/१३.

**उतत्वः[1] पश्यन्न ददर्श वाचम् उतत्वः शृण्वन् न शृणोत्येनाम् ।**
**उतोत्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासा ।।इति ।**

इत्यादिना निन्दा श्रवणात् मन्त्र इत्थं व्याख्यात यास्केन अप्येकः पश्यन्नपश्यति, वाचमपि च शृण्वन्नशृणेत्येनामविद्वांसमाहार्थमिति । अस्यायमर्थः यः पुमानर्थं न वेति तं प्रतिपूर्वार्धेन मन्त्रो ब्रूते । एकः पुरुषः पाठमात्र पर्यवसितो वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति, एकवचन बहुवचनादि-विवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात् आदित्यानेवस्वेन भागधेयेनोपधावति त एवेनं भूतिं गमयतोत्पादवक्तुत्पन्नः कथं पाठं निश्चिनुयात् । अन्यः कश्चिदर्थ ज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति, यावतोऽश्वान्प्रतिगृण्हीयात्तावतो वारुणा चतुकपालान्निवयेत् इत्यत्र व्याकरणमात्रेण प्रतिग्रहीतुरिष्टिः प्रतीयते । मीमांसायान्तु न्यायेन द्दातुरितिनिर्णीतम्, तस्मादुभयविधमप्यविद्वासं प्रत्येव माहेति । तृतीयपाद तात्पर्यं दर्शयति अप्येकस्मै तन्त्रं विसस्नइति स्वमात्मानं विवृणुते ज्ञानं प्रकाशमर्थस्या हानया वाचेत्यर्थः । अस्यायमर्थः । अपि शब्दपर्याय उतोशब्दः सच पूर्वोक्तानभिज्ञवैलक्षण्यायात्रप्रयुक्तौ निपातानामनेकार्थत्वात् । यः प्रमान्-व्याकरणार्थगः स्व शब्दार्थमीमांसया तात्पर्य च शोधयितुं प्रवृत्तस्तस्मा एकस्मै वेदः स्वकीयां तनुं विसभ्रे । स्वमित्यादिकं पद व्याख्यानं ज्ञानमित्यादिकं तात्पर्यव्याख्यानम् ।

वेदार्थ प्रकाशनक्षमं सम्यगज्ञानमनया तृतीयपादरूपया वाचा

---

१. ऋ०वे०भा०भू०, पृ० १६.

मन्त्र आहेति। चतुर्थपाद तात्पर्य दर्शयति उपमोतया वाचा जायेवपत्ये कामयमाना सुवासा ऋतु कालेषु सुवासाः कल्याणवासाः कामयमाना ऋतु कालेषु यथा सं एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा। अयमर्थः– उक्तमया चतुर्थ पादरुपया वाचा तृतीया पादस्योपमोच्यते। उशतीत्यस्य व्याख्यानं कामय मानेति। यद्यप्यह्नि गृहकृत्य वेलायां मलिन वासस्तथापि संभोग-कालेषु कल्याण वासा भवति। तत्र हेतुः कामयमाना ऋतु कालेष्विति। यथा स पतिरेनां जायां साकल्पेना दर युक्तः पश्यति किं च तयोक्तमर्थः हित बुद्ध्या शृणोति तथायं चतुर्दश विद्या स्थान परिशीलनो पेतः पुरुषोवेदार्थ रहस्यं सम्यक् पश्यति, वेदोक्त च धर्मब्रह्मरूपमर्थ हित बुद्धूया स्वीकरोति। सेयमुक्ता वेदार्थाभिज्ञस्य प्रसंशा।

अन्यापि ऋक् यास्केन प्रदर्शिता —

**[1]उ त त्वं सख्ये स्थिरपीत माहुर्नैनं हिन्वन्ति वाजिनेषु ।**
**अधेन्वा चारति माययैष वाचं श्रुश्रुवां अफला अपुष्पामिति ।।**

**अस्य मन्त्रस्यायमंभिप्रायः –**

यः पाठमात्र परः पुष्पः रहितां वाच श्रुश्रुवानभवति, पूर्व काण्डोक्तस्य धर्म स्व ज्ञानं पुष्पम्, उत्तरकाण्डस्य ब्रह्मणो ज्ञानंफलम्, यथालोके पुष्पं फलस्योत्पादकं दृष्टं तथा वेदानुवचनादि धर्मज्ञानमनुष्ठानद्वारा फलात्मक ब्रह्म ज्ञानेच्छां जनयति, तमेतं वेदानुवचनेन।[2] ब्राह्मणाविविदिषन्ति यज्ञेन दानेन

---

१. ऋ०भा०भू०, पृ० १७.
२. वृ०उ०, ४/४/२२.

तपसाऽना शकेन इति श्रुतेः, तादृश पुष्यफल रहितं वेदपाठकः अधेन्वामायया सह चरति, प्रीति हेतुत्वाद्धिनोतीति व्युत्पत्त्या नवप्रसूतिकागो दोग्धी धेनुरुच्यते, पाठमात्र परं प्रति वेदरूपा वाग्धर्म ब्रह्म ज्ञानरूपं क्षीरं न दोग्धीत्यधेनुः। अत एवासौ माया कपटरूपा ऐन्द्रिजालिक निर्मित गोसदृश रूपत्वात् तया ममया सहचरन्तयं परम पुरुषार्थ न लभत इत्यर्थः। इत्येवं रूपेण वेदार्थविदः प्रसंशामुपन्यस्य निन्दामपि प्रदर्शिताऽनर्थस्य, यथा – ये अर्वाङ्त[१] वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति। सर्वे अग्निं द्वितीयं तृतीयञ्च हंसमिति। यावती वैं देवतास्ताः सर्वा वेदविदि ब्रह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवेनमस्कुर्यान्नाश्लीलं कीर्तये देता एव देवताः प्रीणाति अत्र विद्वान् अर्थाभिज्ञः पुरुषः, सच द्विविधः, अर्वाचीन काले समुत्पन्नश्चतुर्दशविद्यास्थानं कुशलः कश्चिदुपाध्यायः, पुरातन काले समुत्पन्ना मनुव्यासादयश्च। एतदुभयविधं विद्वासं विद्यामदधनमद कुलमदोपेताः पण्डितं मन्या ये पुरुषा अमितं दूषयन्ति ते आदित्यमग्निं हंस च दूषयन्ति हंसौ वायुः। अत एतदुपेय दिवे दिवे नमस्कुर्यात् वेदविदभ्यो ब्राह्मणेभ्यः स्व पापापनुतये, न चेतदध्ययनमात्रस्य फलम्, मन्त्रे विद्वांसमित्याम्नातत्वात्, अन्यथा वेदमधीयानमित्याम्ना येत, यो वेदमधीत्याप्यर्थ न जानानि तस्य निन्दा प्रस्तुता – स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञः इत्सकलं भद्रमश्नुतेनाकमेतिज्ञानविधूतपापा। यद् गृहीतमविज्ञातं निगदे नैव शब्द्यते। अनग्नाविव शुष्कै द्यी न तज्ज्वलति कर्हिचित्। अस्मिन्

---

१. तै०आ०, २/१५.

मन्त्रद्वये योऽर्थज्ञइत्यनेनेवाऽर्थेन वेदार्थ ज्ञानं प्रशस्यते। इतरेणार्थत्रयेण ज्ञान राहित्यं निन्द्यते। एतस्य तात्पर्यं एतदव्यवहितेन पूर्ववर्तिमन्त्रेण प्रकाशितम्। एवञ्च सम्यग्रूपेणं शास्त्रानुरोधिमर्यादामनुरूध्येव, सा च मर्यादा षड्ङ्ग ज्ञानरूपा—

**छन्दः पादो तु वेदस्य हस्तो कल्पोऽथ पठ्यते ।**
**ज्योतिषामथनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।**
**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।**
**तस्मात्साङ्गमधीत्येव ब्रह्मलोके महीयते ।।** इति षडङ्गानि ।

षडङ्गानुसारेण वेदार्थविदेव वास्तविको वेदज्ञोविद्वान न तु पाठमात्र पर्यवसायोति वदार्थज्ञस्य विदुषः प्रशंसा, तदरितरस्य निन्दा च श्रुत्येव प्रकर्शिता यथा व्याख्याता वेदभाष्यकृता अनेन च केवलं वेद पाठकस्य व्रात्यत्वायनीदन-मात्रं न तु फलप्राप्तिः अर्थस्य तु फलप्राप्तिरपीत्युभयोः पार्थक्यं सम्मगुणपादितं लोक दृष्ट्यनुरोधेनापि एतेनेव वेदाध्ययनाधिकारिरपि प्रदर्शितो वेदितव्यः। षण्णमेवाङ्गानां ज्ञानप्रयोजनं व्याकरण ज्ञान मीमांसाज्ञान प्रयोजन निरूपम दिशा निरूपणीयम्। दिङ्गमात्र मन्त्र प्रदश्यते — शिक्षा नाम वर्णस्वराद्युच्चारण प्रकारीपदेशकं शास्त्रम् तद्भाव उच्चारणादो नामयथार्थत्वेन फलाभावात् —

कल्पस्तुआश्वलायनापस्तम्ब बौधायनादि सूत्रम् कल्प्यते – समधूयते याग प्रयोगोयत्रेति व्युत्पत्तेः तद्भावे मन्त्राणां विनियोगस्यासिद्धेः ।

व्याकरणस्तु प्रकृतिप्रत्ययाधुपदेशेन पदस्वरूपतदर्थनिश्चयायोप-युज्यते व्याकरणं विना व्युत्पत्तिरेव नोद्भवतिः प्रधानं च षट्ष्वङ्गेषु व्याकरणम्

प्रधाने च कृतो यत्नः फलवान भवति।

अर्थावबोधे निरपेक्षतया यद् जातं यत्रोक्तं तन्निरुक्तम् 'शब्दानां' निर्वचनात्मकम्। तत्र तत्र वेदे छन्दोपदेशो यथा।

गायत्रयुष्णि गनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतो एतानि सप्त छन्दासि ज्योतिष प्रयोजनं वेदे एव आम्नातम्।

प्रातर्जुहोति सायं जुहोति, वसन्ते ब्राह्मणोऽग्नीव् आदधीत् इत्यादिना। षडङ्गानां यथा वेदार्थज्ञानपयोगित्वं तथेवेतिहासपुराणानामपि तदुपयोगित्वं स्मर्तव्यम्, एतदभिप्रायेण —

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विधानां धर्मस्य च चतुर्दशः ।।**[१]
**अङ्गानि वेदाश्चत्वारोमीमांसा न्यायविस्तारः ।**
**पुराणं धर्मशास्त्र च विद्या ह्येताश्चतुर्दश ।।**[२]
**इतिहासपुराणाभ्यां वेद समुपवृंहयेत् ।**
**विमेत्यल्प श्रुताद् वेदोमामयं प्रहरेद्रिति ।।**[३]

ततद्ग्रन्थप्रतिपादितानां विषयाणां वेदार्थज्ञानोपयोगित्वं तत-च्छात्रेष्वेव स्फुटं तद् संलापनीयं व्युत्पत्तिमद्भिः।

षडङ्गेतिहासपुराणार्थज्ञानादिभिः साध्यो वेदार्थ इति स एव मुख्यः

१. या०स्मृ०आ० ३.
२. न्यायमञ्जरी, पृ० ४.
३. म०भार०, १/१/६८.

तदुपकारकतया चान्येषांगोणत्वमप्रधानत्वात्, तच्चाम्नातम् —

**द्वेविधे वेदितब्ये इति हस्ययद् ब्रह्मविदो वदन्ति परार्चवापरा च ।।** [१]

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽर्थववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथपरा यथा तदक्षरमधिगम्यते इति।

साधनभूत धर्मज्ञान हेतुत्वात् षडङ्गसहितानां कर्मकाण्डानामपर विद्यात्वम्। परम पुरुषार्थभूत् ब्रह्मज्ञान हेतुत्वादुपनिषदा पर विद्यात्वम्। परापर-रूपस्य वेदास्यार्थज्ञता मतिदुरुहता च प्रतिपादितमुक्तेन प्रकारेण, तस्य हि स्थलविशेषेषु रहस्यमुद्घाट्यतां महापुराणामुक्तिरपि समुज्जृम्भतेतत्र तत्र यथा —

छन्दोविदस्ते य उतनाधीत वेदा न वेद वेद्यस्य विदुहितत्त्वम् इति। श्लोकोऽयं यथा व्यावृतो छादयन्ति हवा एनं छन्दांसि पापात्कर्मणे[२] —

इति श्रुत्या छन्दः शब्द निर्वचनात्। प्लावाह्येते अदृढा यज्ञरूपाः इति अर्थवणोपनिषदि यज्ञानां पापद्रक्षितुम सामथ्यर्दशनात, ब्रह्मविद्यार्थानां छन्दसां मुख्य छन्दस्त्वं कर्मार्थानान्तु गोणमिति भावः। कि च उत अपि येऽत्यधीतः वेदाः सोपनिषत्कं वेदं पाठतोऽर्थतश्च अधीतवन्त स्तेऽपि न छन्दोविदः। यत् वेद वेद्यस्य औपनिषदस्य पुरुषस्य तत्त्वं याथात्म्यं न विदु नं जानन्ति। पुष्यं हि फलम् वाचः सत्यम् इति श्रुतिश्चेतदाह सत्यं परं ब्रह्म इति एवमन्येऽपि श्लोका उदाहर्तव्याः —

---

१. मु०उ०, १/१/४.
२. म०भार०, ५/५३/५०.

छन्दांसि नाम द्विपक्ष वरिष्ठ स्वच्छन्द योगेन भवन्ति तत्र ।
छन्दोविद स्तेन न तानधीत्यगता न वेदस्य वेदस्य न वेद्यमायाः ।।
न वेदानां वेदिता कश्चिदस्ति कश्चित्त्वेतान बुध्यतेवापि राजन् ।
यो वेद वेदान् न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् ।।
न वेदानां वेदिता कश्चिदस्ति वेद्येन वेदं न विदु न वेद्यम् ।
यो वेद वेदान् स च वेद वेद्यं यो वेदं न स वेद सत्यम् ।।
यो वेद वेदान् स च वेद वेद्यं न तं विदुर्वेदविदो न वेदाः ।
तथापि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो भवन्ति ।।
धार्मांश भागस्य तथाहि वेदा यथा च शाखा हि महीरुहस्य ।
सं वेदनं चैव यथामनन्ति तस्मिन् हि सत्ये परमात्मनोऽर्थ ।।[१]

इत्यादयः एवमन्यत्रापि —

वेदा ब्रह्मात्म विषया स्त्रिकाण्ड विषया इमे ।
परोक्ष वादा ऋषयः परोक्षं मम च प्रियम् ।।
शब्द ब्रह्म सुदुर्बोधं प्राणेन्द्रिय मनोमयं ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ।।
मयोबंहितं भूम्ना ब्रह्मणानन्तशक्तिना ।
भूतेषु घोषरूपेण विसेपूर्णेव लक्ष्यते ।।
यथोर्णनामिर्हृद्या दूणार्मुद् वमतेमुखात् ।
आकाशाद्घोषवान् प्राणे मनसा स्पर्शरूपिणा ।।

---

१. म०भार०, ५/४३/५१-५५.

इन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओङ्काराद्व्यजितस्पर्शस्वरोष्मान्तस्थभूषिताम् ।।
विचित्रभाषा विततां छन्दोभि श्चतुरुन्तरे ।
अनन्तपारां वृहती सृजत्याक्षिपते स्वयम् ।।
गायत्र्युष्णिागनुष्टुप च वृहती पङ्क्तिरेव च ।
त्रिष्टुप जगत्पत्तिच्छन्दो ह्यत्यष्टति जगद्विराट् ।।
किं विधते किमाचष्टे किमनप् विकल्पयते ।
हत्यस्यां हृदयं लोके नान्यो मद् वेद कश्चन ।।
मां विधतेऽभिधते मां विकल्प्यापोह्यते त्वहम् ।
एतावान सववेदार्थः, शब्द आस्थाय मां भिक्षम् ।।
माया मात्र मनुधान्ते प्रतिषिध्य प्रसीक्षति ।। [१]
सर्वज्ञात्सर्वशक्तेश्च मतो वेदः समुत्थितः।
अज्ञाननस्य मया भावादप्रमाणा न च श्रुति ।। [२]

चार्नेकः प्रमाणेः सिद्धं भवति यत् वेदस्य साक्षात्परमात्मरूपतया तस्य याथार्थ्येन ज्ञानं कस्य भवति? यश्च वेदानामर्थज्ञः स च ईश्वर एव एतस्यार्थस्योपोद्वलीकीमन्त्रश्च उ त त्व मित्यादि प्रदर्शित एव।

**निष्कर्षः –**

अतः सर्वमूर्धन्यस्य विश्वसितरूपेणश्वरात्प्रादुर्भूतस्य तपः प्रभवेण

---

१. श्रीमद्भागवते, ११/२१/३५-४३.
२. देवी०भा०, '७/३९/१६.

तेष्कल्मषत्व सम्पादितान्तः करणवतां ऋषीणां मनसि स्वतः प्रादुर्भूत स्यस्थावरजङ्गमादि निखिलचराचरविर्भावनिरोधयोः कारणभूतस्य अन्यानपेक्ष स्वतः प्रमाणभूतस्य त्रैवर्णिकानां द्विजत्वसम्पादकस्यानेक कल्प व्याकरण-मीमांसादिभिरेव तर्कितार्थस्य स्वर्गापवर्ग लोकयत्रादि शास्त्रीय लौकिक निखिलप्रवृतिनिदानभूतस्य स्वाश्रयक स्व विषयकाज्ञाननिवृतो चान्ते बन्धाश्रयो-पलक्षितस्वरूपज्ञानस्येव वस्तुतो निर्वर्तकस्यास्माभिः शब्दराशि रूपेणाभिज्ञानस्य शब्दं ब्रह्मरूपस्य वेदस्य विषये किमस्याभिरत्यते वर्कुशक्यमिति केवलं वाग् व्यापारेणेव मननरूपामावृति मावर्तयाम इति सिद्धं वेद स्वरूपादि निरूपणम्।

**अन्तत्वम् –**

शाङ्करवेदान्तगतोपासना विचार प्रसङ्गे शङ्करवेदयो विचारो निर्वर्तितं स्तद् घटकेषु वेदेषु विचारः क्रमशः प्रदर्शनीय इत्यतः क्रम अन्तःपदस्येति विचारः प्रस्तूयते।

**अन्तशब्दनिष्पत्तिः –**

शाङ्करवेदान्त उपासना विचारणीयाऽस्तीतिप्रकृतम् तत्र शब्द-क्रमानुरोधेन शाङ्कर शब्दस्य वेद शब्दस्य चा संभावितपक्षाणां निरसनेन शास्त्रसंमताभि प्रायेणार्थाः प्रतिष्ठापिताः तेनेव च क्रमेणान्तः शब्दस्यार्थ शास्त्रानुसायर्थः प्रदर्शनीयः तस्या प्रदशृनेऽर्थ प्रत्यापक हेत्वन्तराभावेनार्थानिष्यतेः शब्दस्यैव साक्षादपरोक्ष्य ज्ञान[१] जनकत्वं स्वीकृतं विद्वद्भि वेदान्त समये अतोऽन्तः शब्द निष्पत्तिः प्रदर्शनीया भवति।

---

१. चि०सु०, पृ० ५३०.

अतिबन्धने धातीर्थ प्रत्यये अन्त इति निष्पतिः भ्वाद्यन्त गत्यर्धक अमधातुतो बाहुलकातन् प्रत्ययेऽपि अन्त इति रूपं भवत्येवेति धातुद्वय निष्यार्थ अन्तः शब्द इति।

**अन्तःशब्दर्थ –**

धात्वानुसारेण गति बन्धन चेत्यर्थद्वयं स्वंभावत एव सिध्यत्यन्त शब्दस्य एव चेतदर्थ व्यातिरिक्ता अर्थाः संभवन्ति नवेति भवतिप्रतिपति जिज्ञासूनाम तस्तस्यान्यत्र निर्दिष्टा अर्धा यथार्थाः प्रदश्र्यन्ते —

अन्तः स्वरूपे, स्वभावे, नाशे, प्रान्ते सीमायाम् निश्चये अवयवे निकटे मनोहरे चेति एव मन्यत्र —

**'अन्तः स्वरूपेनिकटे प्रान्ते निश्चयनाशयोः ।'**

अवयवेऽपीति हेमः इति। अत्र च काम अर्थः संभवति अन्तः शब्दस्य अत्रोट्टङकितेषु नवस्वर्थेषु प्रत्योऽर्थचतुष्टयं तु संभवत्येव। अत्र नाशरूपस्त्वर्था न संभवति। अदशने इति धातोर्निष्पन्नो नाशशब्दो दर्शनकृत्त्यनभिव्यज्ञ्यत्वेन निर्दिष्टः अत्र तु तथार्थो न घटते तस्या दर्शन रूपतया अन्तः शब्दार्थस्य च दशम रूपतया अभिप्रतत्वेन परस्परं विरोधात् आत्मा वा अरे द्रष्टव्य।[१] इति श्रुतेरात्मदर्शनस्य शास्त्रज्ञान प्रयोनतत्वात् इति।

प्रान्तश्च प्रकृष्टोऽन्तः मयपेदयः पुनरन्तो नास्ति। यद्यठ्यत्रा खण्डकार

---

१. वृ०उ० – ४/५/६.

वृतेः प्रकृष्टान्तत्वमस्ति तथापि तत्रोपासनाया अनुपयोगात् सोऽप्यर्थ प्रकृता नुपयुक्त इति ।

सीमा मार्यादा सा च देशरूपा कालरूपाचेति द्विविधा द्विविधाया अपि सीमाया अत्रानुपयोगात्सोप्यर्थोऽत्र न समन्वेति वेदस्य सर्वाधारत्वरूपेण प्रस्तुतत्वादन्त शब्दस्य तद्विशेषणतयोपस्थापितत्वादिति ।

देशयज्ञानामुपकरणाना च वाचक अवयव शब्दः न्यायमते प्रतिज्ञाहेतुदाहरणोपनयनिगमनाना न वाचकः वेद प्रकारतया भासमानस्यान्तः शब्दस्यैतादृशार्थकरणे विशिष्टेकार्थ प्रतिपादकत्वा भावेन विशेष्यासङ्गतत्वेन विशिष्टेकार्थ प्रतिपादकत्वाभावाद् वाक्यत्वस्यैवानिष्पपत्त्या तथा निर्दिष्टार्थो संभवः इति ।

समीपे निषेद्धे च निकट शब्द प्रयोगः अत्रार्थद्वयस्यापि सम्बन्ध किचिदपेदयेव भवति अत्रचापेक्षयः क? यदि वेदस्तर्हि – अनन्वयः अन्वये वा पूर्वोक्त वेदत्व निर्वचन विरोधादत उभयमपि नात्र संप्रसरतीति ।

रूचिरे, कुन्दवृदो, जात्यां, स्वर्णयूथ्यां स्वर्णो च मनोहर शब्दस्य वृत्तिः रुचिरातिरिक्ते शब्दान्तरे तु विचार एव नावतरति रूचिरश्च रूचिं रातीति रुचिरः सचार्थो वेदे कथमन्वीयात्, अन्वषे वा कः तत्वर्थोनिष्पद्यते वेदान्त शब्दस्य वेद रुचिर इत्यर्थस्तु न प्रतीयतेऽतः सोऽप्यर्थोऽत्र न घटत इति ।

परिशेषादत्रार्थत्रयस्य संभव परिशेषश्च – प्रसक्त[१] प्रतिषेधेऽन्य-

---

१. न्या०भा०, १/१/५.

त्राप्रसङ्गाच्छिष्माणे सम्प्रत्यय: यथा सदनिन्यमेवामादिना द्रव्यगुणकर्मणाम-विशेषेण सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्य तस्मिन् द्रव्यकर्मगुण संशये न द्रव्यम् एकद्रव्यत्वात् न कर्म शकान्तर हेतुत्वात्, यस्तु शिष्यते सोऽयमिति शब्दस्य गुणत्व प्रतिपति: रिति वेदत्रापि प्रदर्शितेषु नवष्वन्त: शब्दार्थेषु षण्णां प्रकृतानुपयुक्तत्वा दिनाऽसभवेन त्रयाणां निश्चय-स्वरूप-स्वभावना मन्त: शब्दार्थताऽर्थत: सिद्धाप्रकृतीपयुक्तत्वादित्यायातम् तथा च कथं तेषां प्रकृतोपयुक्तमित्येव विचारणीयता मर्हति, अन्यथा ततर्थबोधक पदघटित शब्दसमूहरूप वेदवाक्यस्योपासना प्रयोजकत्वाभावेन उपासनाया एतत्प्रयोज्यत्वानुपपत्ते: । निरउपसर्गपूर्वकं चयनार्थक चि धातुत अच् प्रत्यये गृहवृद् इत्यीदिवा अप् प्रत्ययो वा निश्चय इति सिद्धयति, तस्य चार्थीज्ञान सामान्यं प्रतीयते, विशेषतस्तु – संशयान्यज्ञानम् निर्णय: ।[1] सिद्धान्त: इदमेवेति विषयपरिच्छेदश्चेत्यर्था: संभवन्ति, कश्चार्थीऽत्रीययुक्त:? अत्र च निर्णयार्थ: सिद्धान्तार्थश्च सङ्गच्छेते यतो वेदनिर्णये वेदसिद्धान्त वापासना कीदृंशीति भवति प्रतिपतिरस उभयमप्यनुगतं प्रतीयते । यतश्च सिद्धान्त: प्राय उपसंहार एव प्रयुज्यमानो दृश्यते वेदस्येव वीपसंहाराभिप्रायेण वेदान्त शब्द प्रयोग: वेदादो च[2] पर: प्रोक्ति वेदान्तेषु प्रतिष्ठित: इत्युक्ते: ।

निर्णयश्च वादिप्रतिपादिनोर्विवादे मध्यस्थ प्रदर्श्य ज्ञानविशेषं विमृश्य[3] पक्षप्रतिपक्षाभ्यामर्थावधारणं निणर्य "इति सूत्रात् अत्र ज्ञानं कर्म वा

---

१. शस्तो० म०, पृ० २४९.
२. वे०स्व०वि०, पृ० ४४३.
३. न्या०सू० – १/१/४१.

मुक्तिसाधनमिति विप्रतिपतो मध्यस्थ भूतयोपनिष्दांज्ञानमात्रं मुक्तिसाधनं तत्र चोपासना प्रायोज्ञानाङ्ग भूतेति निर्णीता। तथा च वेदनिर्णये उपासनेति फलितम्। एव च निश्चयार्थकताऽन्तः शब्दस्येति निरूपितेति।

स्वरूपमप्यन्तः शब्दार्थः रूपधात्वर्थी हि ज्ञानानुकूल व्यापार विशेषः स च व्यापारि समवेतः व्यापारिश्चात्र स्व शब्देनीपात आत्येव स्वाप्यय[१] संपत्त्यो नन्यतरापेक्ष भाविष्कृतं हि इति सूत्रे स्व शब्देनाऽत्यन एव ग्रहणात् स्वमपीतो।[२]

भवतीत्यत्रापि स्वः शब्दस्याऽऽत्मेवार्थः एवं स्वाप्ययात्।[३] इति सूत्रे आचार्येण स्व शब्देनेहाऽऽत्मेवीच्यत्।[४] इति कण्ठत एवोक्तमतः स्व शब्दस्यात्मार्थकत्वेऽविवादः। तथा च स्वरूप रूपं स्वरूपमिति वेदस्वरूपे – उपासनेत्यपि भवति स्वभावोऽप्यथीन्तः शब्दस्य स्वः शब्दस्यचार्था आत्मेति स्वरूप शब्दार्थ प्रसङ्गेऽभिहितः स एवार्थोऽत्रापि। भावोहि – सता स्वभावाभि-प्रायचेष्टात्मजन्मसु।[५] क्रिया लीलायदार्थेषु विभूतिबन्धुजन्तुषु हरत्यादो चेत्थभिधानादुपर्युक्ता नेकार्थकः अनयाच वाचोभङ्ग्या भुव अनेकार्थकत्व माम्नातं भवत्यभिप्रेत्येदं तत्त्वभावेन।[६] इत्यसूत्रयच्चतुवारम् महर्षिः।

एवं भगवताऽपि स्वभावोऽऽध्यात्ममुच्यते इति श्लोके स्वभाव

---

१. ब्रह्म०स० – ४/४/१६.
२. छां०उ० – ६/८/१.
३. ब्रह्म०सू० – १/९.
४. शां०भा० ब्र०सू० – १/१/९.
५. अमर०, पृ० ४३३.
६. ब्र०सू० २/१/९, २/२/८, २/२/१२, ७/२/२८.

शब्दं व्याकुर्वन् स्वो भावः स्वभावः।[१] स्व भावोऽऽव्यात्म मुत्यते, आत्मानं देहमधिकृत्य प्रत्यगात्य तथा प्रवृतं परमार्थ ब्रह्मवासानं वस्तु स्व भावोऽध्यात्म मुच्यतेऽध्यात्म शब्देनाभिधीयते इति व्याकृतम्।

यदक्षरं[२] ब्रह्मेत्युक्तं तस्येव स्वभावः स्वीभावः स्वरूपं प्रत्यक्चैतन्यं न तु स्वस्य भव इति षष्ठी समासः लक्षणा प्रसंगात्। षष्ठीतत्पुरुष बाधेन कर्मधारय परिग्रहस्य श्रुतपदार्थान्वयेन निषदस्थपत्यधिकरण सिद्धत्वात्। तस्मान् ब्रह्मणः सम्बन्धि किन्तु ब्रह्मस्वरूपमेव। आत्मानं देहमधिकृत्य भोक्तृतया वर्तमानमध्यात्म मुच्यतेऽध्यात्म शब्देनाभिधीयते न करणग्राम इत्यर्थः इति।

तथा स्वीऽनागन्तुकोभावः[३] स्वरूपं स्वभावः शुद्धस्त्वं पदार्थ सोऽध्यात्ममुच्यते इति एवं वाचः पर्यनुयौक्तव्यास्वभावाद्रधुनन्दन इति श्लोका व्याख्याने स्वाभिपाक्षः ननु स्वः।[४] स्वात्मकी भावः स्वभावः स कथं विरुद्ध विकल्पात्मकः स्यात् विरोधीहि परसापेक्षः। स्वोभावस्त्वनन्धापेक्षः यदि स्वीयोभावः स्वभावस्तथाप्यसो स्वमात्र सापेक्षो न पर सापेक्ष इति कथं परसापेक्षस्य विकल्पस्य स्वरूपं निमितं वा स्यादिति पर्यनुपुज्यते तर्हि तथा स्वभावं विहाय वाचः पर्यनुयोक्तव्याः। ता एव हि चिज्जहादि शब्दरूपाः। स्वाः पुनरुक्तस्तेय स्वार्थ व्यावतर्यन्त्यश्चैतन्य जाड्ये विरुद्धेगमयतः इति च।

एवं बहुविधेः शास्त्रीय युक्तिभिरसाधारणधर्म वस्तुतो भू धात्वर्थ

---

१. गीता० ८/३/ शा०भा०।
२. गीता० ८/३/ मधु०।
३. गीता० ८/३/ कीलक।
४. यो०वा ६ पूर्वा ८०/६४ तात्पर्य।

इति पर्यवसिती भवति, एकस्य धर्मस्य बहुव्यक्ति वृतित्वे तस्यासाधारणं विलुप्यत एव सामान्यन्तुसर्वसाधारणं भवति, अतोऽसाधारणता प्रति व्यक्ति पर्यवसितैव। अयमेवाभिप्रायः प्रस्फुट उपर्युक्त ग्रन्थांश सन्दर्भेण स्वभाव निर्वचनात्मकेन। अभिप्रेत्येवेदमाश्रिहितम् —

प्रतियोग्यसमानाधिकरण हेतु समानाधिकरणात्यन्ताभाव-प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्य व्याप्तिरिति।[१] चिन्तामणि सिद्धान्त व्याप्ति लक्षणघटकं भवति पदं कपि-संयोगवतस्तादात्म्येन साध्यकस्थलेऽव्याप्ति वारकमिति, भू धातोरसाधारण धर्मत्वात् एवच्च सर्वमाजस्ये नोपययते सर्वत्र, तद् वदत्रापि स्वभावः शब्दार्थः स्वभिन्नेऽपर्याप्तः स्वमात्र वृतित्वादित्यावेदितमेव स प्रमाणम्। अत एवान्तः शब्दः स्वभाव वाचकोऽपीति सिद्धस्तथा च वेद स्वभावोपासनेति बोधस्वीकारे कः तत्वतिभारी वचनस्येति। एव च वेद निश्चया वेदस्वरूपा वेदस्वभाववो-पसनेति सिद्धं भवति।

यद्वा वेदास्त्वनन्ता देवलोके, अस्मत्परम्पराप्राप्तास्तु नान्ता इति यदिविभाव्यते तदा प्रान्तः सीमा वा अन्तः शब्दार्थः, तथा च वेद सीमायां प्रतिपादिता या सा एवेति प्रतीयते।

**वेदान्तमहत्त्वम् –**

एवं हि वेदोपसंहार भागस्थानामुपनिषदां तन्मूलकानां स्मृति-

---

१. सि०ल०चि०मूलम्।

पुराणानामितिहासानां तथैव स्तोत्राणामपि वेदान्तसिद्धान्त निरूपकतामुपपाद्य तस्यैव सिद्धान्तस्य परिष्कृत रूपेण प्रतिपादकतया गौडपादादिकृतीनां भगवत्पादकृतीना च तथात्व मुपपादितम्, एवं ततोऽपि सूक्ष्मरूपेण प्रतिपदार्थानां परिष्कारेण नवीनरीत्युपस्थापाद्वारा नव्यन्याय भाषानिबद्ध परसिद्धान्तानां तथैव भाष्या पराकरणाभिप्रायेण पक्ष निबन्धानां प्रत्यक्तत्त्वप्रदीपिका खण्डन खण्ड खाद्याद्वैतसिद्धिसदृशानां ग्रन्थानां निर्माणेन च।

**प्रमाणप्रश्नवदुतरं वाच्यम् –**

**यथाविधं यं विषयं निजस्य प्रश्नस्य निर्वक्ति परी यथोक्त्या।**

**वाच्यस्तथैवोतरवादिनापि तथैव वाचा स तथाविधोऽर्थः ।।**[१]

प्रश्नस्य यः स्याद्विषयः स वाच्यो वाचा तथा चैष भवेन्निरुक्तः। इदं त्वायाप्यास्थित मेतयैव गिरा स्वपृच्छाविषयस्य वक्त्रा। इति श्लोकोक्तं प्रयोजनम्।

**प्रौढिवादेन –**

वस्तुत्वाद्[२] वेद्यत्वं साधयता यद्यदवस्तु ततद् वेद्यमिति व्याप्तिरभ्युपेया। तथा सत्यस्या व्याप्तेर्ग्राहिका संविद् व्याप्तिग्रहणसमये स्फुरति न वा? आद्ये स्वेनैव स्फुरणे सौगतमतानुमतस्वप्रकाशत्वापत्तिः। तत्स्फुरणस्य स्व हेतुताया अप्यनङ्गीकारे वेदान्तसिद्धान्ताभिमतं स्वयं प्रकाशत्वं त्वयाऽभ्युपगतं

---

१. सि०ल०चि०, पृ० ५९५.

२. तत्त्वप्रदीपिका, पृ० ३३.

स्यात्। द्वितीये तु संविल्लक्षण वस्तु विशेषस्फुरणादेव सर्वोपसंहारवतो-व्याप्तिरेवास्तमियातत्र कुतोऽनुमान प्रसरः कुतस्तरां च प्रवृतस्य सप्रतिसाधनता। अपि च भाटानां ज्ञाततयां व्यभिचारान्यायिकादेश्च वेद्यत्वस्यापि धर्मतयाऽ-त्यन्ताभाव प्रतियोगित्वादवेद्यस्यापि कस्य चित्संभवेन वस्तुत्वादेः केवलान्व-वित्वेनाभिमतस्यापि हेतोः संभावित विपक्षतया विपक्षबाधक तर्कमन्तरेणा-प्रयोजकत्वात्। न हि अनुभूतेरवेद्यत्वे वस्तुत्वानुपपत्तिः, स्वतः सिद्धतायामपि तदुपद्यतेः इति खण्डननिष्ठा शैली प्रदर्शिता, स्वकीयाद्वैतवादस्याप्पुपस्थापने शैली तथा विधैव — 'वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वा संभवात्, शूद्रस्य वृत्ति-विषयत्वं न संभवति, अतः शुद्धं स्वप्रकाशम् इति वाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा च अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति, यथा भेदनिषेधेनाभिन्नत्वम् इति।'.

अतो वाद्युक्त शैलीना मनाग्रहे वाद्युकस्य वस्तुतः खण्डनमुप्युक्तं वस्तुन स्थापन च जातं स्वाभ्युपगत सिद्धान्तानुसारेणेति मध्यस्थानामुदासीनानां वाऽनाश्वासः स्यादिति। एवं हि स्वस्वरूपरक्षाये समय प्रभावादस्ति हि शैत्या उपयोगित्वम्। अनया च शैत्या अद्यावधि महत्वमस्य शास्त्रस्य जानन्त्रि विज्ञासवः, इच्छन्ति च ज्ञातम्, अयमेव प्रभावः खलु तादृशा एव महान्तो ग्रन्था वर्तन्तेऽद्यत्वेऽप्याचार्य शास्त्र्यादिपरीक्षायां निर्धारिता विभिन्नासु विश्वविद्यालयपरीक्षासु स्वित्यतिरोहितमेव सर्वेषाम्। अस्य च महत्त्वं श्रुत्येव गीतम् —

**वेदान्तविज्ञान सुनिश्चितार्थाः संयासयोगा द्यतयः शुद्धसत्त्वाः।**
**ते ब्रालोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे।।**

स्यात्। द्वितीये तु संविल्लक्षण वस्तु विशेषस्फुरणादेव सर्वोपसंहारवतो-व्याप्तिरेवास्तमियातत्र कुतोऽनुमान प्रसरः कुतस्तरां च प्रवृतस्य सप्रतिसाधनता। अपि च भाटानां ज्ञाततयां व्यभिचारान्यायिकादेश्च वेद्यत्वस्यापि धर्मतयाऽ-त्यन्ताभाव प्रतियोगित्वादवेद्यस्यापि कस्य चित्संभवेन वस्तुत्वादेः केवलान्व-वित्वेनाभिमतस्यापि हेतोः संभावित विपक्षतया विपक्षबाधक तर्कमन्तरेणा-प्रयोजकत्वात्। न हि अनुभूतेरवेद्यत्वे वस्तुत्वानुपपत्तिः, स्वतः सिद्धतायामपि तदुपद्यतेः इति खण्डननिष्ठा शैली प्रदर्शिता, स्वकीयाद्वैतवादस्याप्पुपस्थापने शैली तथा विधैव — 'वृत्तिकाले वृंत्तिरूपेण धर्मेण शुद्धत्वा संभवात्, शूद्रस्य वृत्ति-विषयत्वं न संभवति, अतः शुद्धं स्वप्रकाशम् इति वाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा च अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति, यथा भेदनिषेधेनाभिन्नत्वम् इति।'

अतो वाद्युक्त शैलीना मनाग्रहे वाद्युकस्य वस्तुतः खण्डनमुप्युक्तं वस्तुन स्थापन च जातं स्वाभ्युपगत सिद्धान्तानुसारेणेति मध्यस्थानामुदासीनानां वाऽनाश्वासः स्यादिति। एवं हि स्वस्वरूपरक्षाये समय प्रभावादस्ति हि शैत्या उपयोगित्वम्। अनया च शैत्या अद्यावधि महत्वमस्य शास्त्रस्य जानन्त्रि विज्ञासवः, इच्छन्ति च ज्ञातम्, अयमेव प्रभावः खलु तादृशा एव महान्तो ग्रन्था वर्तन्तेऽद्यत्वेऽप्याचार्य शास्त्र्यादिपरीक्षायां निर्धारिता विभिन्नासु विश्वविद्यालयपरीक्षासु स्वित्यतिरोहितमेव सर्वेषाम्। अस्य च महत्त्वं श्रुत्येव गीतम् —

**वेदान्तविज्ञान सुनिश्चितार्थाः संयासयोगा द्यतयः शुद्धसत्त्वाः।**
**ते ब्रालोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे।।**

अस्य व्याख्या 'वेदान्त जनित विज्ञानं वेदान्त विज्ञानं तस्यार्थः परमात्मा विशेषः सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञान सुनिश्चितार्थाः । ते च संन्यासंयोगात्सर्व कर्म परित्यागलक्षण योगात्केवल बलनिष्ठा स्वरूपाद्योगा-द्यतयो यतनशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं येषां सन्यास योगा ते शुद्रसत्त्वाः । तेब्रह्मलोकेषु, संसारिणां ये मरणकालास्तेऽपरान्ता स्तानपेक्ष्य मुमुक्षुणां संसारावसनि देह परित्यागकालः परान्तकालस्तस्मिन् परान्तकाले । साधकानां बहुत्वाद् ब्रह्मैवलोको ब्रह्मलोक एकोऽप्यनेक वद् दृश्यते प्राप्यते वा । अतो बहुवचनं ब्रह्मलोकष्विति ब्रह्मणीत्यर्थः । परामृताः परममृतममरण धर्मकं ब्रह्मात्म-भूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः परामृताः सन्तः परिमुच्यन्ति परि समन्तात्प्रदीप निर्वाणवद् घटाकाशवच्च निवृत्तिमुपयान्ति । परिमुच्यन्ति परि समन्तामुत्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते । शकुनीनामिवाकाशे जले वारिचरस्य च । पदं यथा न दृश्यते तथा ज्ञानवतां गतिः । अनध्वगा अध्वसु पारयिण्यावः इति श्रुतिस्मृतिभ्याम देशपरिच्छिन्ना हि गतिः संसार विषयैव । परिच्छिन्न साधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदन गन्तव्यम् । यदि हि देश परिच्छिन्नं ब्रह्मस्यान्तर्भूत द्रव्यवदावन्तवदन्याश्रितं सावयवमनित्यं कृतक च स्यात् । न त्वं वं विधं ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देश परिच्छिन्ना भवितुं युक्ता । अपि चाविद्यादि संसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम् । इति सन्दर्भेण एतादृश वेदान्तविज्ञानवद्भिः । प्राप्याया गतेरिति किमु वक्तव्य मस्यागतेः सम्पादकस्य वेदान्त शास्त्रस्य महत्त्वम् ।



# द्वितीयोऽध्यायः

## अद्वैतवेदान्तस्य सर्वश्रेष्ठत्वनिरूपणम्

सर्वदर्शनशास्त्रेषु अद्वैतदर्शनस्य महत्वपूर्णस्थानमस्ति। प्रायः वेदान्तशब्दस्य प्रयोग अद्वैत दर्शने एव भवति। अन्यदर्शनबोधायोपलक्षणमपेक्षते, तथा विशिष्टाद्वैतशुद्धाद्वैतादयः। सर्वाणिदर्शनानि आध्यात्मिकविवेचनपरत्वादाध्यात्मिकशास्त्राणीति गीयन्ते। तथा च वेदान्ते आध्यात्मिकविवेचनं मोक्षोपयोगिजीवात्मापरमात्मविवेचनञ्च प्रतिपादितम्। अतोऽस्य शारीरिकमीमांसेत्यपरपर्यायनाम। भामत्यां वाचस्पतिमिश्रैः प्रतिपादितञ्च शरीरम् एव शारीरिकम्[१], तत्र भवः शारीरिकं जीवात्मेति तस्य विचारः। तथा च वेदान्तशास्त्रोपनिषदादि तत्र तत्रासंवादरूपाख्यायिका, आदित्याद्युपासनादि प्रतिपादिततत्वेन कथं परमात्मज्ञानमवबोधयति इति न। तत्र वेदान्ते उपासनादि प्रतिपादितत्वेऽपि तन्मूलकपरमात्मज्ञान विवेचित्वात्तेषामत्र न कोऽपि विरोधः। अपितु सहकारित्वमेव। यथा कठोपनिषद् नचिकेत मृत्युसंवादे येयं प्रेते विचिकित्सा मनुष्योऽस्तीत्येके नापमस्तीति चैके।[२] इत्यादिना आत्मविषयं मृत्युनां विचारयति माणवको नचिकेतः। मृत्युरपि स्वपरीक्षोत्तीर्णता

---

१. ब्र०सू०भा०भा०टी०।
२. कठोप०, पृ० ६५.

प्राप्ताध्यात्मंविद्याया अधिकारि नचिकेतां तं दुर्दशं गूढमनुप्रविष्टं गुहाहितं[१] गहवरेषु पुराणम्' इत्यादिना परमात्मज्ञानं सम्यगबोधयामास। तथैव च मैत्रेयी, याज्ञवल्क्य संवादेऽपि स्वपत्नी ब्रह्मनिष्ठा मैत्रेयी याज्ञवल्क्य विज्ञातारमरेकेन विजानीपात् इत्यादिनात्मतत्वमवगमयति। छान्दोग्योपनिषदि[२] अथ यदतः परोदिवोज्योतिर्दीष्यते विश्वत प्रष्ठेषु सर्वतः।[३] पृष्ठेषुष्वनुत्तमेषूत्तमेषु लोकेषुष्विदं वाव तद्यादिदमस्मिन्नन्तः पुरुषे ज्योतिः इत्यादि ज्योति शब्दकथनेनापिलौकिकाम्न्यादि तेजः विहायाऽलौकिक परात्मानमैव बोधयति वेदान्तः। तदवदादित्योपासनादिष्वपि पञ्चाग्नि विद्यायान्यार्थतः परमात्म-स्वरूप प्रतिपादनेन वेदान्तेन सह न कश्चिद्विरोधः। अतः ब्रह्मानन्द भिक्षुणा न्यायरत्नावल्यां वेदान्तदर्शन दर्शनेषु सर्वेषु दर्शनीयतमं दर्शनम्[४] इति वेदान्तस्यात्यन्त प्राशस्त्यं कथ्यते। भगवद्गीतायां, यज्ज्ञात्वानेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते[५], तस्य कार्यं न विद्यते[६] इत्यादिना परमात्मनो महत्वमेव स्पष्टीकरोति।

अमृततत्वस्य नाशस्तिक्तेन इत्यादयो मन्त्रा आत्यन्तिक भवबन्ध निवृत्तिपूर्वकपरमात्मप्राप्तिः कर्मकाण्डाध्ययन, तदनुष्ठानादि नापि तीर्थादिषु प्रयासासादितदव्यदानादिना वाः सेशतोऽपि सम्भवो नास्तीति वित्तसाध्यकर्मणां

---

१. कठोपनिषद्, पृ० ६३.
२. कठो० पृ० ६३.
३. छान्दोग्योपनिषद् –
४. छान्दोग्योपनिषद् – ३/१३/६.
५. न्या० –
६. भगवद्गीता – ७/२.

मोक्षोपयोगित्वं निराकुर्वन्ति। ननु वेदान्तशास्त्रेपरमात्मविषयनिरूपणग्रन्थे कुर्वन्नेवेह कर्माणि जिजीविशेच्छत[१] समाः इत्यादयो मन्त्राः यावज्जीव कर्मणा कर्तव्यत्वं न चोदयन्ति परमपुरुषार्थ प्राप्तिरपि तेनैव भवतीति वेदान्तशास्त्रेण सहविरोधो भवेत् इति चेत् तत्र तासां श्रुतीनामशुद्धचित्तविषयत्वादन्तःकरण शुद्ध्यादिविषये कर्मणाम्। सार्थकता न परमात्मप्रतीताविति। अत एव तत्रैवेशावास्योपनिषदि एवं त्वयि नान्यथेतोऽस्ति न कर्मलिप्यते नरे इति मन्त्रे नरमात्राभिमानि पुरुषे कर्मानुष्ठानादीनां विन्यमाग्राणामभावो प्रतिपादितः। प्लवाह्यते अदृढा यत्ररूपा अष्टादशोक्तरभवरं येषुकर्म एतच्छेयो येभिनन्दन्ति मूढाः जरामृत्युं ते पुनरेवायियन्ति इत्यादिनामन्त्राणां पर्यालोचनेन यज्ञाचरणादिकर्माणि अददत्वादिदोषदूषितानि जरामृत्यु सहितं संसारप्रतिपादिकानि न तन्निमूलकानि इति तेषांनिन्देव कृता ब्रह्मसूत्रेऽपि[२] सर्वापेक्षा च यज्ञादि श्रुतेरश्ववत् अतएव चाग्नीन्ध धनपेक्षा 'सूत्राभ्यां कर्मणा चित्तशुध्यादिकर्मणि प्रयोजकत्वं प्रसाध्य परमपुरुषार्थभूतमोक्षं कर्माणि न सम्पादयन्ति साक्षादिति। श्री शंकरभगवत्पादः आत्मानात्मा विवेचनं स्वानुभवो[३] ब्रह्मरात्मनासंस्थिथितिर्मुकिक्तर्नोशतकोटि इत्यादिवचनेन परमात्मज्ञानेनैव मुक्तिरिति दृढ़यति। सैव परमपुरुषार्थो नित्यश्चेति न स पुनरावर्तते न स पुनरावर्तन्ते इति श्रुत्यावगम्यते। न पुनः संसारी भवति, जन्ममाङ् न भवतीत्यर्थः। तत्र कारणं मुक्तत्वमेव। तच्च ब्रह्मस्वरूपेणावस्थानमेव। तथा च ब्रह्मणः योवै[४] भूमातदमृतमढेसत्यंज्ञानमनन्तं ब्रह्मनित्योनित्यानां इत्यादिश्रुतिभयः

---

१. ईशा०उप०। २. ब्र०सू०।
३. ब्र०सू०। ४. ब्र०सू०।

नित्यत्वेन प्रतीयमानत्वात् तत्स्वरूप मोक्षस्यापि नित्यत्वम्।

एतादृश परमात्म प्रतिपादनमुपनिषत स्वेवेत्युपनिषदः वेदान्ता इति लोके प्रसिद्धिः तदुपकारकतयातद्विषयविवेचनद्वारा स्थाणूनिननवत्परमात्मज्ञानदादयंता पूर्वक आत्मासाक्षातकारात्मकोपनिषत्फलैकत्वं दर्शितत्वाद ब्रह्मसूत्रादारभ्य भाष्यादि ग्रन्था आचार्यादिनाकृतस्तोत्राणामपि वेदान्तत्वं स्थापितमेव। सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुतयो नित्यशुद्धबुद्ध-युक्त स्वभावात्मानं प्रतिपाद्यवेदान्ताः स्वमत्वप्रकटीकुर्वन्ति एव।

लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति शास्त्रवचनम् अतः पूर्वमीमांसाद भिन्नोत्तरमीमांसा शास्त्रं प्रमाणं विना सुदृढं स्थापितं न भवतीति प्रमाणोपन्यासो अवश्यं यथा कर्तव्यः। प्रमाणश्चात्र श्रुति स्मृत्यादयः। वेदान्तविज्ञान सुनिश्चतार्थाः सन्यास योगाद्यतपः शुद्धसत्वा।[१] इत्यस्मिन् मन्त्रे कीदृश परात्मज्ञानेनमोक्षो भवतीति तदवक्ष्यते। वेदान्तजनित विज्ञानवेदान्तविज्ञानं परमात्मा तस्यार्थः स विज्ञेयः सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञान सुनिश्चितार्थः। ते च सन्यासंयोगात्सर्वकर्म परित्यालक्षणयोगाः केवलब्रह्मनिष्ठास्वरूपाद्योगाद्यतन-शीलाः शुद्धं सत्वं येषा सन्यासयोगास्तेशुद्धसत्वा इतिमन्त्रस्य व्याढया अस्मिन् मन्त्रे सुनिश्चतार्था इति विषयात्मक फलरूपात्मज्ञानं मोक्षात्मकं लक्ष्यते। तस्य साधन वेदान्तविज्ञानम्। वेदान्तपदं विनाविज्ञान पदस्य योगेन न्यायवैशेषिकादि शास्त्रेष्वतिव्याप्ति स्यात् तेषां पदार्थज्ञानादिना न परमात्म साक्षात्कारः अपिचित्तवृत्तिनिरोध रूपेणयोगेन, योगशास्त्र जन्य ज्ञानेन वा मोक्षो न भवति

१. वि०चू० श्लोक ५८.

नासात्मविषयत्वात् कपिल प्रणीतसारथेनापि मोक्षो न भवति नानात्मविषयत्वात्। पूर्वमीमांसाशास्त्रज्ञानेन वा न मोक्षः तेषां कर्मकाण्डप्रतिपादनेन निवृत्तत्वात्। तथा सगुणोपासनादपि न कैवल्यम्। तेषां स्वर्गादितत्वात् फलविहितत्वात्। नास्त्य कृतः केनन अमृतत्वस्य नाशास्तितित्वेन इत्यादि श्रुतिभ्यः कर्मणः मोक्षाभिव्यजनकत्वं। नास्तीत्यवगम्यते च श्रीशांकरभगवत्पादानां वचनमस्मिन् विषये न योगेन न[१] साख्येन कर्मणा नो न विद्यया। ब्रह्मात्मकत्वं बोधेन मोक्षस्सिष्यति नान्यथा इति।

परमात्म प्राप्ति मोक्षस्तु वेदान्त विज्ञानजनितोत्कृष्ट-ज्ञानादेव भवति। ते ब्रह्मलोके तुपरान्त काले परामृतात् परिमुच्यन्ति सर्वे इत्यस्यां श्रुतो परामृतात् वेदान्तविचारजनित ज्ञानादित्यर्थः।

**ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंवरे।**
**परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्।।** [२]

अस्यांश्रुतौ कृतात्मानः प्राप्त परमात्मसाक्षात्कार इत्यर्थः। गीतायां भगवान् श्रीकृष्णं सर्वकर्मसन्यास पूर्वकपरमात्मरूपेणावस्थानं ब्राह्मी स्थितं प्राप्तानन्तरं ब्रह्मनिर्वाणात्मक मुक्तिं प्राप्नुवन्तीति एषा ब्राह्मी स्थितिः पार्थेन प्राप्यविमुहयति स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति। इति श्लोके-नार्जुनायावबोधयति। वेदान्तोदरसंगूढं संसारोत्स्मरि वस्तुगम इति नैष्कर्म सिद्धवचनम्। अस्मिन् श्लोके अधिष्ठानात्मकब्रह्मज्ञानं सम्पूर्णासंसारनाशनं

---

१. वि०चू० श्लोक ५८.
२. वही, श्लोक ५८.

प्रतिहेतुः । तज्ज्ञानं वेदान्तशास्त्रादवगाह्यते तत्रैव परमात्मज्ञानं निहितमिति नैष्कर्मसिद्धिकाराणां मुक्ति प्रतिपादकवचनमपि वेदान्तशास्त्रे प्रमाण भवति अपि च वेदान्त कल्पतरुकार स्वोक्त्या च दृढयति वेदान्तवाक्यज्ज्ञानभावना सापरोक्षधीः । मूल प्रमाणदाढ़र्येन न भ्रमत्वं प्रपद्यते य इति । यापरोक्षधीः, वेदान्तवाक्यजन्या सैवमूलप्रमाण प्रबलत्वात् दुर्बल भ्रमनिवर्तिका भवति न तेन सह सीभावः यदा केवलाऽपरोक्षधीस्तदा तु प्रमाणदृढ़तराभावेन यत्किंचिदशभेदेनकालिक भेदेन वा भ्रमादिना सहभावः भवतु वेदान्तप्रभाव जन्या तु सर्वथा स्वेतराणां निवर्तिका। इत्येव शतशः श्रुतिस्मृत्यादयो वेदान्तशास्त्रं प्रमाणी कुर्वन्ति न वेदान्तशास्त्रे प्रमाणमिति कथं प्रमाणीकुर्वन्ति न वेदान्तशास्त्रे प्रमाणमिति कथं वा वक्तुं शक्यते ।

आश्रम प्रमाणेन प्रमाणितं वस्तु परेणां तुष्टेयऽनुमानेन प्रमाणित-तत्वमपि संपादयाम् श्रुतिमनस्तर्कानुसंधीयताम्[१] इति शाङ्कर भगवतपादानां वचनात् तथा चानुमानं वेदान्तशास्त्रं पूर्व मीमांसातो भिन्नं अर्थप्रयोजनाधि-कार्यद्देश्यभेदात, न्यायवैशेषिक शास्त्रवत्, न चात्रा प्रसिद्धविशेषणम्, दृष्टान्ते प्रसिद्धत्वात्, शान्तोदान्त उपरतस्तितिक्षुः ।[२]

**"प्रशान्तचित्तायं जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे ।**
**गुणान्वितायानुगताय सर्वदा प्रमेयमेतत् सततं मुमुक्षवे ।।"[३]**

१. वे०क०भा०, पृ० ५६.
२. सो०प० ३-उप० सा० - १६/३६२.
३. उप०सा० १६/३७२.

इत्यादि श्रुतिस्मृति वचनादिना सिद्धत्वाच्च। प्रत्येकं हेतुगत विशेषणं पूर्वत्र प्रतिपादितत्वादत्र न स्पष्टीक्रियते। तथा च युक्तरपि यदि वेदान्तशास्त्रं न प्रसिद्धं तदा मोक्षप्रदायकक्षरमात्म प्रसिद्धिर्न स्यात् आस्तिकदर्शनेषु नानासंख्यापरिपूर्णअपि न स्यात् इत्यादि तर्कादीनां सत्वे कथं शास्त्रैक्यम् वा सिद्धयेत्। एवं श्रुतिस्मृति वचनयुक्त्यादिना वेदान्तः पूर्वेमीमांसा शास्त्रा-दन्यदेव शास्त्रमिति प्रसिद्धम्। वेदान्तोऽस्मिन् लोकेवयं नानावस्तूनि यानि पश्यामः, तानि सर्वाणि मिथ्येति वदति, सर्वमीश्वरस्वरूपम् इति वदतिः नास्माकं तथा प्रतीयते खलु। सर्वयदीश्वरस्वरूपम् तर्हि अस्माकं प्रतीतिर्मिथ्या स्यात्। अस्माकं प्रतीतिर्यदि सत्या स्यात्, तर्हि नास्माकं दुःखं समापतेत् परन्तु दुःखमोपतति। ततो वेदान्तो यद्वदति तदेव सत्यं। यदि तत् सत्यम् तर्हि सर्वमीश्वर स्वरूपमिति निश्चितं स्यात्। अस्माकं प्रतीतिर्मिथ्या सत्यपरमेकं वर्तते। मिथ्या वस्तून्यस्माकं चक्षुंषि पश्यन्ति। सर्वत्र लोकेषु सत्यमेकं वस्त्वनुगच्छतीत्यद्वैतशास्त्रं वदति। अस्माकं वस्तूनीति प्रतीयमानानि सर्वाणि मिथ्या। सत्यमेकमेवस्तु।

सर्वमीश्वरस्वरूपं चेत्, वयं केवलं मन्येवा अस्मानपि तदीश्वर साक्षात्कर्तुमहमिः। तदानीं द्वितीयं नाम न भवति। वयमिदानीं पृथक्-पृथक् पश्यामः। सर्वस्येश्वरात्मना दर्शनमेव समीचीनं दर्शनम्। विनाद्वैतवयमपि यद्येकी भवेम्। समीचीनं भवेत्। लोकोऽपि द्वे मनसी यद्येकीभवतः, तर्हि न कलहो भवति। तद्वत सर्वेऽपीश्वरोभयैकी भवन्ति चेत् सर्वे वयं भवामः। अस्माकमस्मासु कामाना तदानीं नोदियात्। आशायमसत्यां न पापं भवेत्। पापेऽविद्यमाने देहो न स्यात्, देहेऽसति तु दुःखमेव न भवति। तस्या

इत्यादि श्रुतिस्मृति वचनादिना सिद्धत्वाच्च। प्रत्येकं हेतुगत विशेषणं पूर्वत्र प्रतिपादितत्वादत्र न स्पष्टीक्रियते। तथा च युक्तरपि यदि वेदान्तशास्त्रं न प्रसिद्धं तदा मोक्षप्रदायकक्षरमात्म प्रसिद्धिर्न स्यात् आस्तिकदर्शनेषु नानासंख्यापरिपूर्णअपि न स्यात् इत्यादि तर्कादीनां सत्वे कथं शास्त्रैक्यम् वा सिद्धयेत्। एवं श्रुतिस्मृति वचनयुक्त्यादिना वेदान्तः पूर्वेमीमांसा शास्त्रा-दन्यदेव शास्त्रमिति प्रसिद्धम्। वेदान्तोऽस्मिन् लोकेवयं नानावस्तूनि यानि पश्यामः, तानि सर्वाणि मिथ्येति वदति, सर्वमीश्वरस्वरूपम् इति वदतिः नास्माकं तथा प्रतीयते खलु। सर्वयदीश्वरस्वरूपम् तर्हि अस्माकं प्रतीतिर्मिथ्या स्यात्। अस्माकं प्रतीतिर्यदि सत्या स्यात्, तर्हि नास्माकं दुःखं समापतेत् परन्तु दुःखमोपतति। ततो वेदान्तो यद्वदति तदेव सत्यं। यदि तत् सत्यम् तर्हि सर्वमीश्वर स्वरूपमिति निश्चितं स्यात्। अस्माकं प्रतीतिर्मिथ्या सत्यपरमेकं वर्तते। मिथ्या वस्तून्यस्माकं चक्षुंषि पश्यन्ति। सर्वत्र लोकेषु सत्यमेकं वस्त्वनुगच्छतीत्यद्वैतशास्त्रं वदति। अस्माकं वस्तूनीति प्रतीयमानानि सर्वाणि मिथ्या। सत्यमेकमेवस्तु।

सर्वमीश्वरस्वरूपं चेत्, वयं केवलं मन्येवा अस्मानपि तदीश्वर साक्षात्कर्तुमहमिः। तदानीं द्वितीयं नाम न भवति। वयमिदानीं पृथक्-पृथक् पश्यामः। सर्वस्येश्वरात्मना दर्शनमेव समीचीनं दर्शनम्। विनाद्वैतवयमपि यद्येकी भवेम्। समीचीनं भवेत्। लोकोऽपि द्वे मनसी यद्येकीभवतः, तर्हि न कलहो भवति। तद्वत सर्वेऽपीश्वरोभयैकी भवन्ति चेत् सर्वे वयं भवामः। अस्माकमस्मासु कामाना तदानीं नोदियात्। आशायमसत्यां न पापं भवेत्। पापेऽविद्यमाने देहो न स्यात्, देहेऽसति तु दुःखमेव न भवति। तस्या

दुःखनिवृत्तेरद्वैतमौषधम्। अद्वितीयीकरणमद्वैतम्। सर्वस्य ब्रह्मात्मना दर्शनमद्वैवतम्। सदसद्रूपेण दर्शनमद्वैतम्।

अत्र कियन्तोऽप्याक्षेपा उद्यन्ति। तेषु न्यायाभास मूलाः केचन्-केचन् तु दुर्न्यायमूलाः, शास्त्राणि सर्वेषां तेषां परिहारं वदन्ति। अद्वैतस्य साधनानि वदन्ति। भगवत्पादैः कृताः प्रकरणग्रन्थास्तमेवोपदेशमुपदिशन्ति।

वयं स्वयिमः। सुप्त्वोत्तिष्ठामः। सम्यक् स्वयिमः कदाचन स्वप्ना भवन्ति। पद जागृमेः सा जाग्रदवस्था। यत् स्वप्नं पश्यामः सा स्वप्नावस्था। यत् सम्यगनिद्रामः साः सुषुप्त्यावस्था। एवं तिस्त्रोऽवस्था वर्तन्ते। वयं जाग्रमः कर्मकर्तुम्। सम्यक् स्वयिमः कर्मकरणनिमित्तान् श्रमानपनोदितुम। एताभ्यां द्वाभ्यामेवालं खलु। स्वप्नः किमर्थं इत्यालोचयम्। ईश्वरस्सर्वत्र वर्तते। सोऽद्वितीयं ब्रह्म। सर्वात्मस्वरूपम्। तन्निदर्शनमुखेन निरूपितुं निदर्शनार्थमिमं स्वप्नं सृजतीति प्रतिभाति। अपरं किमपि प्रयोजनं नास्ति। अयं प्रपञ्चोऽस्माकं बहुधा प्रतीयते स्वप्नवद् वर्तते स्वप्ने कान्यपि कान्यपि दुःखानि सुखानि चाविर्भवन्ति प्रतिभान्ति। स्वप्न उपरते किमपि नास्ति। स्वप्ने दृश्यमाने आसीदिति प्रतिभासं शरीरमपि नावतिष्ठते। एवं स्वप्नमपश्यामेति जानन एक एव परिशिष्यते। स्वाप्निकानि सर्वाण्यपराणि गच्छन्ति। प्रपञ्चस्वप्नादस्मासूत्थितेषु ज्ञानमेकमेवावशिष्यते। तदेव वस्तु सत्यम्। तस्यैवाद्वैतमिति नाम। सहस्रशोदर्शनं द्वैतम्। वयं सर्वेऽपि द्वैतिनः द्वैतानुभवै वर्तामहे परमत्वद्वैतं विश्वसन्तोऽनुभवैं द्वैतरूपं स्वप्नमेव पश्यामः। स्वप्ने व्याधिं दुःखं चानुभवामः। व्याधेस्तरुणावस्था काचनास्तीति वयं विश्वसिमःद्वैतं केन प्रदश्यते? चक्षुरादि नेदानं प्रत्यक्षं प्रदर्श्यते। अद्वैतं वेदान्तेनैव प्रदर्श्यते। शास्त्रेण

प्रदर्श्यमानमद्वैतम् चक्षुषा प्रदर्श्यमानं तु द्वैतम्। सूर्य कियदपि योजनं विस्तीर्ण इति शास्त्रं वदन्ति अस्माकं चक्षुः सूर्यः प्रादेशमात्र इति वदति। करेण विहितं चेत तिरोभवति। ततः स्वल्प इति प्रतिभाति। किं सत्यम्? यद वयं पश्यामः तदेवचेत् सत्यम्, शास्त्राणि वितथानि। अस्माकमज्ञातमेव शस्त्राण्यस्माकमुपदेष्टुमर्हन्ति।

तत कुत्रचेनोपदिश्यते। अद्वैत कुत्रोपदृश्यते परब्रह्मस्वरूपमधिकृत्योपदेशस्थाने उपदिश्यते। माण्डूक्योपनिषद् प्रणवस्वरूपस्योपदेशप्रकरणे सर्वमद्वैतम्, तदेव सर्वमित्युपसह्रत्योपदेशावसरे अद्वैत मिति पदं वर्तते। द्वैतमिति पदमेकस्यामुपनिषदि वर्तते। स्वयं पृथग् भूत्वा पृथग् वस्तु कथं पश्येत्। सर्वस्मिन्नात्मसाद्भूते किं को वा पृथग् अनुभवेत्? इत्येतत् प्रकृत्योपदेशावसरे यत्रहि द्वैतामेव भवति इति वदति। द्वैतमिव यत्रावस्थायां वर्तते, तत्र तथाऽस्तीति वदति।

यतहि द्वैवमिव भवति तदितर इतरं पश्यति, यत्रत्वस्य सर्वमात्मैवाभूततत्केन कं पश्येत्। इति वृहदारण्यके – यदा सर्वमात्मसाद भवत् तद्वाद्वैतम् पृथक् पृथग् दर्शनावस्थायां द्वैतमिवेत्युक्तमस्ति। इवेति स्थले द्वैतम्, आत्मसादभवदित्यत्राद्वैतं चोक्तमस्ति। तु इत्येकं पदमद्वैतस्योपदेशावसरे वर्तते। एकस्य पदस्थान्तरम्। तु, अथवा अथेति पदं समापतति चेत्, तदनन्तरमुपसंह्रत्यापदेकं वदामि इति मन्तव्यम्। यत्र तु इति स्थले सर्वमात्मसाद भवदित्युक्तमस्ति। 'तु' इत्यनेनोपसंहारः .............आत्मस्वरूपमेव सर्वमिति ज्ञातुमर्हामः। इवेति चेत्, प्रतिभासमात्रम्, न तु सत्यमस्ति। स इवेतिवदामश्चेत्, न स इति प्रतीयते। तदेवं द्वैतमिवेत्युक्ते द्वैतं नास्तीत्येव सिद्धान्तः। अस्माकं

चक्षुषा प्रतीयमानं द्वैतम्। तत केवलं प्रातिभाषिकम्। शास्त्रेण ज्ञायमानद्वैतम्। तदेवसिद्धान्तः। सर्वमात्मैव इत्येव सत्यम्। अत्रात्मेति वर्तते खलु। परमात्मेति खलु स्यात्? इति पृष्टुं शक्यते। परमात्मेत्युच्यते चेत्, क्षुद्रात्मा कश्चन स्यात्। तथा कोऽपि नास्ति, इति हेतोः परमात्माऽपि नास्ति। सर्वमात्मैव द्वैतावस्थायामेव परमात्मा जीवात्मेति। अद्वैतद्भावे तु आत्मैव।

द्वितीयाद्वै भयं भवति इति वृहदारण्यकोपनिषदि द्वैतेन भीतिः दुःखम् वेदानाञ्च भवन्तीत्युच्यते। द्वयोविषमयोर्वस्तु – नोस्सतेरेव कामना, भति दुःखमित्यादीन्युदभवन्ति। अस्माकं प्रिया म्रियन्ते चेत दुःखमुदेति। अस्माकं पुरतस्ते म्रियन्ते चेत्, दुःखमुद्भवति, वयं गच्छयश्चेत्, दुःखं न भवेत, खल्विति चिन्तयामः। अस्मासु गर्तष्वस्माकं न दुःखं स्यात्। अस्मास्वेव सर्वसाद्भूतेषु दुःखमेव न भवति दुःखस्य प्रतिभाने भेदस्मरणं वर्तते। प्रीतिः कुतो भवति? द्वे इति प्रतीत्यैव अस्मथ्योऽन्यः कश्चनेति चिन्तयैव प्रीतिः, तद्वियोगेन दुःखं चोदेति। अस्मास्वेव तदभावमापन्नेषु वियोग एव न भवति, दुःखमेव न भवति। एकसात् कथं कर्तव्यम्? सर्वं परमात्मसाद् भवति चेत्, एक एवात्मास्यात्।

तत् एव द्वितीयं मा भवतु। अद्वैतमैव सत्यमितिवेदान्ता उद्घष्यन्ति। इमं विषमस्मदाचार्यपादाः प्रदीपवद ग्राहयित्वा मा विस्मरतेति विशदमवभासयन्ति स्म्। भाष्यदीप इति भास्यस्यैकं नाम। वेदे द्वैतमिति पदं समापतति, इति सहसा 'द्वैतम्' इति वक्तुं प्रक्रमन्तें तत् कुत्र प्रकरणे? किमर्थम्? कस्योपसंहारस्य पुरतः प्रयुक्तमिति नालोचयन्ति। न सुरां पिवेत् इति यदि स्यात वेदे तर्हि सुरापानमासीदिति विमर्शनसदृक्षमेवेदमस्ति।

वयमिदानीं स्वप्नावस्थायां वर्तामहे। इत उत्थाने सैवाद्वैतावस्था। स सिद्धान्तः स्मृतौ यदि स्यात्, लक्षेष्वेकोऽपि वा ता अवस्थां प्राप्तुं प्रयतेति पूर्वजाश्शास्त्राणि लिखित्वाऽस्थापयन। काश्यां गङ्गा वर्तत् इति ज्ञानमात्रं न पर्याप्तम्। अनुमति पत्रं गृहीत्वा धूमशकटमधिरुह्यविश्राम स्थानानि सर्वाण्यतिक्रम्य धूमशेकटे निद्रां विना च प्रयाय काशीं प्राप्य गङ्गायां स्नात्वाऽनुभवैनेव वयं द्रष्टुमर्हामः।

अद्वैतावस्था वाङ्मनसयोरप्राप्य निवृत्तिस्थानमिति वेदो वदति। यतो वाचो निवर्तन्ते। प्राप्य मनसा मन्तुमशक्यं चेत कथं ज्ञातुमहार्मः? वेदोक्तेरपि को वा भावः? परमात्मानं जानीयामेति चेद् ज्ञेयं वस्तु तदभवति। ज्ञाताऽपरो भवेत्, केनोपनिषदि मममतमिति विदुषो न अंत भवति, मम न मतमिति जानन्नेव विद्वानित्युक्तमस्ति।

यस्यामतं तस्यंमतं मतं यस्य न वेद सः इति अमतमिति चेत् किम्? तद न मतमीति। दीपं प्रकाशयितुम् अपरं दीपं यद्यानयाम्, तर्हिः तस्य न कोऽप्यर्थः। जड़स्यैव दीपोऽपेक्ष्यते। दीपं ज्ञातुमपरं किमपि नापेक्ष्यते। ज्ञानं स्वत एव प्रकाशते। तदज्ञानमेवास्य स्वरूपम्, यो नामेश्वरः। तेवरमेति-रुवाचकम्, 'वायुमानवरपाटल्' इत्यादि द्राविडग्रन्थेषु बहुषु स्थानेषु ईश्वरः ज्ञानाज्ञानस्वरूपेत्यामन्त्रयते।

तद मनसा न मन्यते। मनस्तेनैव मन्यते। मनसा मन्यमानं सर्व मिथ्या। येन तथ मन्यते, तत् सत्यम्। यन्मनसा न मनुते येनाहुर्मनो मतमिति। स्वप्ने मन्यमानं सर्वमनृतम्। पश्यज्ज्ञानमेकमेव सत्यम्। अयमात्मैव दृश्यमानानि तावन्त्यपिवस्तूनि स्वप्न आसीत्। स्वप्ने विरते एकमेवावशेषितमस्तीति ज्ञायते।

उच्चमानं वस्तु ज्ञायमानं। वस्तु वेति चेत्, ते पृथगेव भवतः। पृथग न भवतश्चेत्, न वक्तुमपि प्रभवामः, न ज्ञातुमपि प्रभवामः। इदमद्वैतमुपनिषदो वदन्ति।

वेदाख्ये वृक्षे उपनिषद्रूपाणि पुज्याणि वर्तन्ते। तानि कण्ठे धारयितुं ग्रन्थे तुं योग्यानि सूत्राणि भवन्ति। ब्रह्मसूत्राणीति भगवत्पादा वदन्ति स्म वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणमिति। सूत्राणि कृतवन्तो यदि व्यासाचार्यः तर्हि तान्यग्रथयन् भगवत्पादाः। तानि धारयितुमर्हामस्तु वयम्। अस्माकं कण्ठे सा मासा स्थातुमर्हति।

साम्प्रतमन्ततोऽजानीम् सत्यमेकमेवास्तिः, सर्वमीश्वर स्वरूपमित्येव। वासनया पृथक् पृथग्वभास्यते। सर्वमेकसात्कर्तव्यम्। वयमित्येतदप्येकी कर्तुमहभिः, तदुपर्युक्तानि शास्त्राण्यध्येतुमहभिः। एतत्-साधनानि श्रुति-स्मृतिपुराणानि देवालय दर्शनम्, आराधनादीनि च प्रापश्चिकानां विषयाणां कृते यावत् कियदपि परित्यजामः। अस्माकं नित्यानन्दं प्राप्तुं सर्वकर्तुमहभिः। जनको विदेह राज्यपदढाअ, मामप्य ददामित्पवादीदिती वदन्तिविदेहं ददामि मा चाषि सह दास्यापेति।

इमामवस्थां प्राप्तुं सुलभं साधनं श्रीचन्द्रमौलीश्वरस्य उपासने त्यप्थयपदीक्षिता अवदन्। तत् सर्वेऽप्यनुसृत्याद्वैतसिद्धिं लभरेन्।

**ईश्वरानुग्रहादेव पुंसामद्वैतवासना।**
**महाभयकृतत्राणा द्वित्राणामुपजायते।।** [१]

१. शि०त०वि०।

**अद्वैतवेदान्तस्योदभवविमर्शः –**

सामान्यतया अद्वैतवेदान्तस्योद्भवश्चतुर्धाविभक्तुं शक्यते। प्रथमोद्भवस्य मूलं वेदोपनिषदो भवतः। द्वितीयविकासः पुराणग्रन्थैरभूत, तृतीयविकासः ब्रह्मसूत्रेण समजायत्, चतुर्था विकासस्य मूलं शङ्कराचार्याणां भाष्यम्। अन्तिमस्तु विकासः शङ्कराचार्य भाष्यरथारथतृभिः कृतै स्वतन्त्र-ग्रन्थश्चाभूत, ततः परं द्वैतवादिभिरद्वैते उद्भावितदोषनिराकरणधूरीणैः श्रीमधु-सूदन, ब्रह्मानन्द सरस्वती नृसिंहाश्रमप्रभृतिभिः कृतैः ग्रन्थरत्नैः समजायत। सर्वप्रथम वेदकालिक ऋषयः वेदोपनिषद्भिः परमतत्वावबोधनाय महान्तं प्रयासं कृतवन्तः। तत्र भगवान वादरायणो ब्रह्मसूत्राणि निर्माय वेदवेदान्ततत्वं प्रकटीचकार ब्रह्मसूत्राण्यस्पष्ट भावत्वात् विभिन्न सम्प्रदायाचार्यैः परतत्वस्य स्वस्वाभिप्रायानुसारेण दर्शनतत्वं बोधकानीति रूपेण व्याख्या कृतानि। बहूनि-मतानि सन्ति वेद प्रामाण्यावलम्बिष्वपि। शङ्कराचार्यैः एषां सूत्राणामुपरि भाष्यं विलिख्याद्वैततत्वं विशदीकृतं तेषामनुयायिनः स्वग्रन्थमाध्यमेनास्य तत्त्वस्य विस्तरेण प्रचारमकुर्वन्। इदानीं दर्शनस्य विकासः सुस्पष्टमुपलभ्यतै।

**पुराणेषु अद्वैतवेदान्तस्वरूपम् –**

अपरोक्षतया पुराणग्रन्थेषु अद्वैतवेदान्तस्य विकासः परिलक्ष्यते। महर्षिव्यासेन स्वनिर्मितपुराणग्रन्थेषु यत्र तत्रास्याऽद्वैत वेदान्तस्य प्रतिपादनं कृतम्। यथोक्तम् —

**बद्धौमुक्त इति व्याख्या गुणतो मेन वस्तुतः।**
**गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्।।** [१]

---

१. श्रीमद्भा० ११/११/२.

**यर्हिसंसृति बन्धोऽयमात्मनो गुणवृत्तिदः ।**
**मयि तुर्ये स्थिते जह्यात् त्यागस्तदगुणचेतसाम् ।।** [१]
**अहंकारकृतं वन्ध्यमात्मनोऽर्थविपर्ययम् ।**
**विद्वान् निर्विंद्यसंसारचिन्तां तुर्येस्थितस्त्यजेत् ।।** [२]

एवं विधेषु स्थलेषु अद्वैतदर्शनस्यैव प्रतिपादनं कृतं व्यासेन। इत्थं भगवद्गीतायामपि अद्वैतदर्शनस्य प्रतिपादनं विद्यते। तत्कालीन एवं योगवशिष्ठः ग्रन्थः, अस्मिन् ग्रन्थेऽद्वैतस्य मुख्यरूपेण प्रतिपादनं जातम्। यद्यपि भगवद्गीता नहि सर्वत्रा अद्वैतवेदान्त प्रवर्तिका। किन्तु योगवाशिष्ठे द्वैतप्रतिपादनस्य ग्रन्थोऽपि न दृश्यते। गीतायामपि प्रायः अद्वैतवेदान्तस्य प्रतिपाद न मन्यन्ते धीधनाः। तथाहि —

**नासतोविद्यते भावो अभावो विद्यतेसतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदशिभिः ।।** [३]

अनेन श्लोकेना अद्वैतदर्शनस्य प्रतिपादनमेव भवति। इत्थं गीतायां माया शब्दस्य प्रयोगः दृश्यते, अतः सिद्ध्यति गीतापि अद्वैतप्रतिपादिका। भगवद्गीतायाः युक्तौ अद्वैतयुक्तौ च तुल्यमेव। नतस्य कार्य विद्यते। इत्यादि वचनेन योगवाशिष्ठे। आत्मवर्णनम् अद्वैतवेदवास्ति। वशिष्ठमते ब्रह्मणा प्रकृतिर्जायते स च प्रकृति मिथ्यास्ति। ज्ञानेनैव मुक्तिरित्यादि सर्वत्राऽद्वैतस्यैव प्रतिपादनं करोति।

---

१. श्रीमद्भा० ११/१३/८.
२. तदेव – ११/१३/१९.
३. गीता० – २/१६.

तथैव विष्णुपुराणेऽपि —

एवं सकलमिदमहम् च वासुदेवः, परमपुमान् परमेश्वरः स एकः भोगं मनोरथम् स्वर्ग स्वर्गैः रम्यं च यत्पदम्।

प्राप्नोत्याद्यितौ विष्णौ निर्वाणमपि चोत्तमम्। इति। ये स्थिर-मतयः परब्रह्मस्वरूपं विष्णावनुरक्ताम् भवन्ति, ते अवश्यमेव तत्पदं लभन्ते। इत्थमन्येषु पुराणेषु अद्वैतवेदान्तस्य प्रतिपादनं सम्यक् जातम्।

**ब्रह्मसूत्रेषु अद्वैतम् –**

उपनिषत् सिद्धान्तानां संकलनमात्रमेव ब्रह्मसूत्रेषु श्रीवादरायणैः वृतम्। ब्रह्मसूत्रस्य लक्ष्यं ब्रह्मणः प्रतिपादनमेवास्ति। ब्रह्मसूत्रस्य आरम्भः "अथातो ब्रह्मजिज्ञासा" इत्यनेन सूत्रेणाऽभूत्। अतएव वेदान्तब्रह्मसूत्रमेव वेदान्तदर्शनशब्देन व्यवह्रयते। ब्रह्मसूत्रेणेव अद्वैतदर्शस्याधारभूतो गन्थोऽस्ति। अस्य गन्थस्य महत्वं विशेषत्वञ्च अनेन रूपेणावलोकयितुं शक्यते, यत अस्मिन्नान्यान्यदर्शनानां खण्डनमभूत्। नकेवलमन्यान्यदार्शनिकानामेव खण्डनम् किन्तु भारतीयदर्शनान्तर्गतान्यपञ्चदर्शन नानामपि खण्डनं अस्मिन् ब्रह्मसूत्रेण कृतम्। यथा सांख्यमीमांसा न्यायवैशेषिकयोगदर्शनादीनां ब्रह्मसूत्रेषु सम्यक-खण्डनं कृतम्। तथैव बौद्धचार्वाकादि नास्तिकानां खण्डनमस्मिन् ग्रन्थे वर्तते।

अतः अन्यमतानां खण्डनात् ब्रह्मस्वरूपस्य प्रतिपादनात् वेदान्तदर्शनमेव ब्रह्मसूत्रं कथ्यते। शारीरिक सूत्रेपदेनापि ब्रह्मसूत्रस्य व्यवहारो भवति। यतोहि शरीरे भवं (विद्यमानं) ब्रह्माधिकृत्य कृतत्वा तत्व्छरीरकशब्देन व्यवह्रियते।

ब्रह्मसूत्रं चतुर्भागेषु विभक्तमस्ति। प्रत्येक भागः अध्यायशब्दे नाऽभिहितो भवति। प्रत्येकाध्यायस्य चत्वारः चत्वारः पादावर्तन्ते। सर्वेषां पादानां संख्या षोडशी भवति। वेदान्तदर्शनस्य प्रथमाध्याये उक्तं यत् सर्वाण्यद्वैतवाक्यानि अद्वयब्राह्मण एव प्रतिपादनं कुर्वन्ति। अत अस्याध्यायस्य नाम समन्वयाध्यायः, अस्मिन्नाध्याये ब्रह्मप्रतिपादकोपनिषद् वाक्यानां पुष्कलता वर्तते। समस्तवाक्यविमर्शान्तरम् एव निश्चयः कृतो यत् वास्तविकं समस्तोपनिषद् वाक्यानि ब्रह्मणः स्वरूपमेकद्वयभावनया एव स्वीकुर्वन्ति, नहि तत्र भेद शङ्कापङ्काकलङ्कावकाशः इत्थं ब्रह्मस्वरूपस्य प्रतिष्ठायाः समन्वयो वेदान्तदर्शनस्य प्रथमाध्याये मिलति। वेदान्तदर्शनस्य द्वितीयोऽध्याये सांख्यवैशेषिकयोगादिकानां तथा बौद्धचावार्क जैनादीनां मतानामालोचना अभूत्। बहुविरोधिप्रश्ननानामुत्तरमुपनिषद् वाक्येनैव दत्तम्। अत एव द्वितीयाध्यायः विरोध परिहाराध्यायशब्देन अभिधीयते।

वेदान्तदर्शनस्य तृतीयोऽध्यायः साधनाध्यायनाम्नाऽभिहितो वर्तते। अस्मिनध्याये बहूपनिषत्सम्मत विधीनामुपासनानाञ्चोल्लेखोभूत्। इमाः विध्युपासना च साधनक्षेत्रे परिगण्यन्ते। अतएवायं साधनाध्यायः। वेदान्तदर्शनस्य चतुर्थाध्यायः फलाध्यायः। अस्मिन् अध्याये साधकानामधिकारानुगतमुपासना विधि भेदात् फलस्य प्राप्तिर्भवति। अतएवायमध्यायः फलाध्यायः अथवा ब्रह्मज्ञानस्य फलनिर्देशनादपि अयमध्यायः फलाध्यायत्वेनाऽभिहितो आसीत्।

वेदान्तदर्शनं प्रस्थानत्रये तर्क प्रस्थानमुच्यते, प्रस्थान त्रयी नाम् गीतोपनिषद् ब्रह्मसूत्राणि। उपनिषद् भागस्तु प्रस्थानत्वेनाऽभिहितः। वेदान्त-

दर्शने श्रुते प्रामाण्यं स्वीक्रियते यथा 'श्रुतत्वाच्च'[१] 'श्रुतेश्च'[२] 'श्रुतोपनिषत्'[३] कगत्यभिधानाच्च इति। इत्यादिस्थलेषु ब्रह्मसूत्रेषु, श्रुतिप्रामाण्यमेवाङ्गीकृतम्।

इत्थं गीताशास्त्रं महाभारतान्तर्गतत्वात् स्मृतिप्रस्थानं कथ्यते अतएव ब्रह्मसूत्रेषु स्मृतिप्रस्थानस्य महात्म्यं स्वीकृतम्। यथा ब्रह्मसूत्रे 'स्मरन्ति'[४] चे। इत्यादिस्मृति बहुसूत्राणां प्रयोगो ब्रह्मसूत्रे दृश्यते। वेदान्तदर्शनं तु स्वयं तर्कप्रस्थानमभिहितं ब्रह्मसूत्रेषु दृश्यते यत् सांख्यदर्शनस्य प्रकृति-पुरुषयोः सिद्धान्तानां खण्डनं कृत्वा ब्रह्मकारणत्व प्रतिष्ठाञ्चकार इत्थं वैशेषिकदर्शनस्य परमाणुवादस्य खण्डनं कृत्वा ब्रह्मणः सत्कार्यवादस्य वा प्रतिष्ठां कृतवान् ब्रह्मसूत्रेषु कृतम्। यथा समुदाय[५] उभयहेतुकोऽपि इत्यादि सूत्रेषु बौद्धस्य खण्डनं जातम्।

इत्थं जैनदर्शनस्यालोचनाऽपि ब्रह्मसूत्रेष्वभूत्। यथा ब्रह्मसूत्रे न कस्मिन् सम्भवात्[६] एवं चात्माऽकात्स्न्यम्,[७] 'न च[८] पर्यायाद व्यविरोधो विकारादिभ्यः इति। एषु सूत्रेषु जैनमतस्यापि खण्डनं सम्यक् कृतं वादरायणाचार्यै। इत्थमन्यान्यमतानां खण्डनं वेदान्तसूत्रेषु समुपलभ्यते।

ब्रह्मसूत्रेषु ब्रह्मैव जगतः सृष्टिं स्थितिलयकारणं नात्र संदेहो।

---

१. ब्रह्मसूत्र – १/१/११.
२. तदेव – ३/९/४६.
३. तदेव – १/२-१६.
४. तदेव – २/३/४७.
५. तदेव – २/२/१८.
६. तदेव – २/२/३३.
७. तदेव – २/२/३४.
८. तदेव – २/२/३५.

यथा ब्रह्मसूत्रे जन्मान्धस्य यत् इत्यादि सूत्रेण जन्मस्थितिलयभङ्गस्य कारणं ब्रह्मैवास्ति। ब्रह्म तु पराऽपरः प्रकृतिभिश्च संयुक्तं यथा – 'प्रकाशाश्रयवद्वार्द तेजस्त्वात्' इत्यादि सूत्रे आभिः प्रकृतिभिरेव ब्रह्मप्रपञ्चं सजते। इमाः प्रकृतयः ब्रह्माधीनाः व्यावहारिक सत्यः कार्योपकारिण्यां भवन्ति। यथा सूत्रे तदधीन्त्वादर्थवत् इति। ब्रह्मभूतामूर्त लक्षणैः संयुक्तमस्ति। किन्तु ब्रह्मणः मूर्तरूपत्वमस्ति सोपाधिकम् यथा "न स्थानतोऽपिपरस्योभयलिङ्गस-सर्वत्रहिन"[१] भेदादिति चेन्न प्रत्येकमतद्वचनात्।[२] इत्यादिसुत्रेषू विवेचितम्।

वास्तविकं ब्रह्मणः स्वरूपं निर्गुणमेवास्ति। यथा 'अल्पवदेन[३] हि तत्प्रधानत्वात्' इति सूत्रेण ब्रह्मणो निर्गुणत्वं सिद्धयति। अनिर्वचनीयं ब्रह्मणः स्वरूपं सा चानिर्वचनीयता शब्दवाच्यत्वलक्षणा न तु मिथ्यात्वरूपा। यथा प्रकृतैतावत्त्वं[४] हि प्रतिषेधति ततोऽब्रवीत च भूयः इति। अंशोनाना-व्यपदेशादन्यथा[५] दाशकितवादित्वम् अधीयत् एके इति। इत्यादिसूत्रेण ब्रह्मजीवयोः अंशांशिभाव सिद्धयति।

'तस्यानित्यत्वात्' इत्यादि सूत्रेण जीवस्य नित्यब्रह्मरूपत्वं जगन्मिथ्यात्वं सिद्धयति। तदुद्धरणसारत्वात्तु "तदण्यपदेशः प्राज्ञवत्" इति सूत्रेण जीवस्य नित्यविमुत्वं सिद्धयतिं। विधैव निर्धारणाद् 'इति ज्ञानेनैव जीवस्य स्वस्वरूपे ब्रह्मणि स्थितिः भवति।

१. ब्रह्मसूत्र – ३/२/११.
२. तदेव – ३/२/१२.
३. तदेव – २/२/१४.
४. तदेव – ३/२/२२.
५. तदेव – २/३/४३.

ब्रह्मविद्यातु कर्मणो नाङ्गम, ज्ञानिवस्तु लोकसंग्रहार्थ कर्म-कुर्वन्ति, कर्मनाशादेव मुक्तिः सम्भवति। शमदमादि साधनानि ज्ञाने सहायकानि भवन्ति। ब्रह्मज्ञाने जाते जन्ममृत्युलक्षणात्संसाराद्विमुक्तो भवति जीवः। अत-एवोक्तम् 'ब्रह्मविदाप्नोतिपदम्' न स पुनरावर्तते। इत्यादि। ब्रह्मसूत्रेऽपि भगवान् वादरायणाः आर्विभागेन दृष्टत्वात्। विभागोत्रावचनात् – इत्यादि सूत्रे वेदान्तस्य विषयो जीवब्रह्मणोरैक्यमित्याह। तदवस्थोपलब्धिरेवमोक्षः। स च ब्रह्म-स्वरूपत्वान्नित्योऽभि ब्रह्मधिष्ठानका विद्याविलासाद्वद् इवा भवति। तथा चाह श्रुतिः।

यत हि द्वैतमिव भवति तत्र इतरं पश्यति यत्रतु सर्वमात्मवा भूतत्तत्रकेन कं पश्येत् इति। एव न चाविद्यावशादेव सर्वद्वितोपलब्धिविद्या वलादेव विलीयते इति वेदान्तसिद्धान्तः। अतएव ब्रह्मज्ञानाय तत् साधनेस्यश्च प्रपन्नाय ब्रह्मसूत्रे निर्देशः अर्थातो ब्रह्मजिज्ञासा इति।

अद्वैतसिद्धान्तस्य प्रधानानि त्रीणि प्रस्थानानि तानि तु गीताभाष्यम् उपनिषदभाष्यम्, ब्रह्मसूत्रभाष्यञ्च। इमानि त्रीण्यपि अद्वैतासिद्धान्तस्य मुख्यान्यव लम्बनानि एतैस्माकं बहूनि प्रकरणान्याचार्यपादा व्यरचयन। तेषु मुख्यानि विवेकचूडामणि इत्यादिनी तैस्सह 'शिवस्त्रोत्रम्' विष्णुस्तोत्रम् अम्बिकास्तोत्रम् इत्यादीनि बहुविधानं निबन्धानपि व्यलिखन्। प्रपञ्चसारं नाम केचन मन्त्र-शास्त्र निबन्धमपि विरचयन्तिस्म्।

आचार्यपादरचितानां निबन्धानां पण्डितप्रवरा बहवो व्याख्यानम-लिखन्। आचार्यकृतिषु प्रधानतमं सूत्रभाष्य। तत्तु बादरायणमहर्षिणा कृतानां

ब्रह्मसूत्राणां व्याख्यानमेव। तेषु ब्रह्मसूत्रेषु दशसूपनिषत्सुप्रतिपादिता विषया वर्तन्ते। तेषां विषयाणां सारः सूत्ररूपेण तत्रोपपादितोऽस्ति। तानि दशसूपनिषत्सु प्रतिपादितानर्थान कथं प्रतिपादयन्तीत्येतद्विस्तरेण प्रतिपादनमेव भाष्यं नाम। तस्य भाष्यस्यैतद्दिनपर्यन्तं बहवोव्याख्यानं कुर्वन्तिस्म्।

आचार्यपादानामुख्यान्तेवासिनः पदमपादाचार्याः पञ्चपादिकां नाम व्याख्यां व्यरचयत्। तस्याः विवरणाचार्या नाम विवरणमकुर्वन, तस्य तत्त्वदीपनं नाम विवरणमेव। एवं व्याख्यान प्रस्थानमेकमस्ति। आचार्यपादानां भाष्य-स्यौत्तराः वाचस्पतिमिश्रा नाम भामती नाम्ना टीकामकुर्वन्। तस्या अमलानन्दो नामकल्पतरुनाम व्याख्यामरचयत्। कल्पतरोरप्ययदीक्षितचरणाः परिमलं नाम विवरणं कृतवन्तः। तस्याः कल्पतरोरेव कोट्टपूरलक्ष्मी नारायणषेयिनः आभोगं नामैकं व्याख्यानि रचितवन्तः। इयमेकापरम्परा।

सूत्रभाष्यस्यैव रामानन्दा नाम रत्नप्रभास्थानामेकां व्याख्यामकुर्वन्। तस्याऽप्येका टीका वर्तते। तस्य सूत्रभाष्यस्यैव आचार्यपादानामन्तेवासी आनन्द गिरिनामापरमेकं व्याख्यातम् रचयन्। तस्यानन्दगिरि इयमिति नाम। सा किं १५० वत्सरेभ्यः पूर्वं त्रयम्बकभट्टाचार्या नाम भाष्यभानुप्रभां नाम भाष्यस्यैक व्याख्यानं विरचयन्तिस्म्। महाराष्ट्रदेशीयो रघुनाथसूरिर्नाम भाष्ये केषांचन पादानां शङ्करपादभूषणं नामैकं विवरणमकुर्वन् एकस्य निबन्धस्यै-तावन्ति विवरणानि वर्तन्ते।

देशेपनिषत्सु वृहदारण्यकस्य तैत्तिरीयस्य च सुरेश्वराचार्या वार्तिकं नाम भाष्यमाश्रित्य लिखितवन्तः तैन तेषां वार्तिककारा इति नाम वर्तते।

भगवद्गीतायाः श्रीमदाचार्यपादकृतमेकं भाष्यं वर्तते। तदनुसृत्य दश व्याख्यानानि वर्तन्ते। सर्वाणीमान्यद्वैतसिद्धानतस्य ज्ञापका निबन्धाः। एवमेव द्वैतसिद्धान्तो नाम कश्चन् पूर्वोक्तानां ब्रह्मसूत्राणां पश्चिमदेशीयाः श्रीमाध्वाचार्या द्वैतसिद्धान्तरीत्या किञ्चिद् भाष्यं रचयन्ति स्म्। तस्यापि बहवो व्याख्यानं लिखितवन्तः। तेषु व्याख्यानेषु अद्वैत सिद्धान्तपरान् निर्णयान् प्रतिरुद्धृत्य ते लिखितवन्तः। ४०० वत्सरेभ्यः प्राक न्यायामृतं नाम निबन्धो अद्वैतसिद्धान्तानां खण्डनेन लिखितः। तस्य निरसनेन मधुसूदनसरस्वत्यो नामाद्वैतसिद्धिं नाम निबन्धं रचितवन्तिः तदनुचितमिति द्वैतसिद्धान्तपक्षे तरङ्गिणी नाम निबन्धो लिखितः। तस्याः तरङ्गिण्याः खण्डनेन गौड़देशीया ब्रह्मानन्दा नाम महान्तश्चन्द्रिकां नाम ग्रन्थं व्यलिखन्। स गौडब्राह्मानन्दीय इति प्रसिद्धिं गतः। तस्य ग्रन्थस्याक्षेपेण द्वैतसिद्धान्तमनुसृत्य वनमालामिश्रा नाम वनमाल-मिश्रीयं व्यलिखन्। भाष्यभानुप्रमालेखकास्त्रयम्बकभट्टाचार्य नाम तं ग्रन्थं निरस्य सिद्धान्त वैजयन्तीं नाम निबन्धं लिखितवन्तिः।

पूर्वोक्तस्य गौणब्राह्मनन्दीयस्य निरसेन षष्ठिवत्सरेभ्यः प्राक् विशिष्टाद्वैतसिद्धान्तरीत्या अनन्ताचार्या नाम्ना न्यायभाष्करं नाम पुस्तकम् लिखन्। तस्य न्यायभाष्करस्याक्षेपेणाप्ययदीक्षितवंशेऽवतीर्णा महामहोपाध्याय श्रीराजुशास्त्रिणो नाम न्यायेन्दुशेखरास्थं ग्रन्थं लिखन्तिस्म्। एवं द्वैतरीत्या अन्ततः खण्डनं सिद्धान्तवैजयन्ती वर्तते। विशिष्टाद्वैतसिद्धान्तस्य खण्डनं तु न्यायेन्दुशेखरो वर्तते एतयोरुभयोः पर्यवसन्ना खण्डन परम्परा। इतः परमियं वद्धेतेऽपि, यदि वर्धेत। यः कोऽपि खण्डनं लिखति चेदपि तत् सर्वेऽपि समालोचयितुमर्हन्ति। तेषां पठनेन विषयपरिशुद्धिः स्यात्। अभिप्रायभेदो

भवति चेदेव परिशुद्धनार्थं सम्भवेत्। अस्माकं देश एकस्मिन् मतेऽभिज्ञा इतरमतग्रन्थानपि जानन्तीति सम्प्रदायः।

अद्वैतवेदान्तस्योद्भवविमर्शप्रसंगे भाष्यकृदाचार्ययशङ्करस्येतिहास विवेचनमावश्यकमस्ति। तस्य साक्षाच्छिष्येणानन्तानन्दनाम्ना केनचित् तदितिहास प्रथमं विरचितः, तत्र नारदस्य हिरण्यगर्भ लोकगमनं तयोश्च कैलासगमनं ज्योतिलिङ्गात्मना शिवस्य केरलदेशे आविर्भावः शङ्करजननीमुखे तज्जनक-भक्ते वा शिव प्रवेशोऽपि न लोकप्राप्तः शास्त्रप्राप्तो वेति कल्पना जालमेव। शास्त्रस्य कस्यचित नामाप्यनन्तानन्देन नोल्लिखितमेव शास्त्रप्राप्तत्वेऽवश्यं तच्छास्त्रम् अनन्तानन्देन सोतसाहमुल्लिख्येत्, अतः सप्तशतवर्षपरकालिकेन माधवाचार्येण यत् शेवे पुराणे स्थितमित्युक्तं तत् पश्चात्तनस्य कस्यचिद् भक्तप्रवरस्य शिवपुराणनिवेशितवाक्यजातदर्शनादेवेति। माधवाचार्यश्चायं सर्वदर्शनसंग्रहकृदन्य एव कश्चिदित्यत्र निर्विवादा ऐतिहासिकाः। शङ्करस्य माता पित्रोर्वासस्थानस्य च नामापि परस्परविरुद्धमेव दृश्यते।

काश्यां व्याससंवादोऽपि न विश्वासाहः, विचारकाले सौम्य-मूर्त्तर्यतिराजशङ्करस्य क्रोधात् व्यासकपोले प्रचण्डाघातोऽपि विस्मयावह एव, ततोऽपि क्रोधानिवृतेव्यासस्य भूमावधोमुख पातन पूर्वकपादामधारणेन दूरोत् सारणार्थं यद्मपादाय निदेशोऽपि त्रयाकर एव। सर्वज्ञः शङ्करो जानन्नपि वेदव्यासं कथ तस्यंकपोलमाजघान व्यासोऽपि सर्वज्ञः कथं जानन्नपि भाविनीमाघात प्राप्तिं कथमाजगाम् तदा पद्मपादेनोक्तं शङ्करः शङ्करः साक्षाद् व्यासो नारायणः स्वयम्। तपोर्विवादं सम्प्राप्त किङ्करः किं करोम्यहम्। इति यं पदमपादो

ज्ञातवान् तं शङ्करः कथं जाज्ञासीत् इति चिन्त्यमेव सर्वथा। ततो भाष्य दर्शनाद् व्यासेनोक्तं मदाशयस्तु दुर्ज्ञेय आचार्यस्त्वं भविष्यसीति इदमेवात्र विधेयं तदुक्तं भास्कराचार्येण भाष्यकारसमसमयवर्तिना सूत्राभिप्रायसंवृत्या स्वाभिप्राय प्रकाशनात्। व्याख्यातं यैरिदं शास्त्रं व्याख्येव तन्निवृत्तये इति अतो व्यासमुखेन भाष्यगौरवख्यापनार्थनेन संवादोऽर्थ कल्पितं तत् आत्म-घातार्थं प्रवृत्तो भाष्यकारो व्यासेन निवारितो विघातारं चानीयेच्छा मृत्युवरः प्राप्तिः, स्वयं च शतवर्षमायुः पदत्तं करेणानीय गङ्गाम्बु जीवत्वं शरदां शतमिति। एतेन प्राप्तं भाष्यकरः शतवर्ष जीवितवान्, भाष्यकृता स्वयं देव्यपराधक्षमापनस्तोऽभिहितं मया पञ्चाशीतेरधिकमपनीते तु वयसि इति किन्तु माधवाचार्येण द्वात्रिंशदस्योज्ज्वलकीत्तिराशेः समाव्यतीयुः किल शङ्करस्येति कुतः प्राप्तम् ? तद्यात्वे च व्यासस्यापि मिथ्यावादित्वापत्तेः।

कुमारिलसंवादोऽप्यलोकं एव, तथाहि केचिदाहु चीनदेशीयेन फाहियानेनोक्तं प्रसिद्धबौद्धाधर्मकीर्ति समकालिक आसीत् इति, फाहियानश्च प्रायः सार्द्धचतुःशततमशकाब्दे भारतं बभ्राम कुमारिलश्च महात्मा धर्मकीर्त्ते-स्तावानुज आसीदिति स्वीकार्यम् एवञ्च शकरस्य अष्टतमशतकीयेन शङ्करेण साकं कुमारिलस्य संवादः कथाकार सम्भवेत् ? अपरे च वदन्ति – द्वाचत्वारि-शंदधिकपञ्चशतंशकाब्दे कुमारिलो जातः द्वयधिकषटशशकाब्दे च सुरपुर-मारुरोहेति। अत्रापि विरोधः सुप्रकटेव। तथा मण्डनमिश्र कुमारिलस्य भगिनीपतिरासीदित्यनन्तानन्दने कण्ठत् एवोक्तं, तर्हि सोऽपि कुमारिल समकालिक आसीदित्यत्र न वैमत्यं, तथा च सति मण्डन संवादः तत्पत्नी-सकाशे पराजयः रतिविद्यालाभावार्थः मृतस्य नृपतेदेह प्रवेशः ततस्त्रीभिः

सार्द्धशङ्करस्य व्यभिचारप्रपञ्चः मोहमुद्गर प्रबन्धः मण्डनस्य सुरेश्वरत्व प्राप्तिरपि गुरोरुत्कर्षख्यापनार्थं कल्पनाजालमेव भक्तानां ज्ञेयम्। मण्डनमिश्रस्य वसत्रिरासीत् हस्तिनापुरस्याग्नेय्यां दिशि विजंयविन्दुग्रामे इत्युक्तमनन्तानन्देन, अतस्तच्छयालकस्य कुमारिलस्यापि वसतिस्तत्रैव प्रदेशे बोध्या, न तु दक्षिणात्ये देशान्तरे वा। अत उत्तरदेशादागत्य कुमारिलो वौद्वान् हिनस्तीत्युक्तमनन्तानन्देन।

भास्कराचार्यस्य नामाप्यनन्तानन्देन नोक्तं स तु शङ्करादपरकालिक एवासीत् अतस्तेनसहशङ्करस्य विचारप्रपञ्चोक्तिः माधवाचार्यस्य कल्पनामात्रं ज्ञेयम्। न्यायाचार्य उदयनश्च षड्धिकन्तशतमशकाब्दे लक्षणावली विरचितवान्, तदुक्तम् —

**तर्काम्वराङ्कमणितेष्वतीतेषु शकान्ततः।**

**वर्षेषूदयनश्चक्रे सुबोधं लक्षणावलीम्।।** इति।।

'अतस्तेन सहशङ्करस्य विचारोऽपि खपुष्पायतिः।' खण्डनकारः श्रीहर्षोऽपि न्यायाचार्यदुत्तरकालिक एव, भ्वाधातावधिराशङ्कातर्कः शङ्कावर्धिमतः' इति कुसुमान्जलिकारिकाया एकमात्रवर्णव्यत्ययेनर्प्रयुक्तवान् न्यायमतं खण्डनग्रंथे श्रीहर्षः तर्कः शङ्कावधिः कुत इति। अतस्तेन सार्द्धशङ्करस्य विचारोक्तिरपिबालप्रलापः।

अनन्तानन्देन भारतीमठस्यैव श्रुङ्गगिरिस्थस्योल्लेखः कृतो न गोवर्द्धनमठादेः शारदापीठविजयप्रपञ्च ग्रन्थोऽपि नोक्तानन्देनेति कल्पितास्तेऽवरकालिकै शिष्यैगुरु तर्कषख्यापनार्थम्। दीर्घकालं काञ्चीतीर्थवासानन्तरं

तत्रैव शङ्करस्य देहावसानं जातं महता च समारम्भेण तत्रैव तस्य समाधिः प्रदत्त इत्युक्तमनन्तानन्देन् किन्तु शारदापीठात् सशरीरस्यैव तस्य कैलास-प्रवेशवृत्तान्तः कथमुक्तो माधवेन ?



# तृतीयोऽध्यायः

## वेदान्तसारस्य पदार्थानां दिग्दर्शनम्

वेदान्तसारस्य विद्वन्मनोरञ्जिनीटीकायाः समीक्षणमिति प्रबन्धेऽस्मिन् पदार्थस्य विवेचनमत्यावश्यकम्। तद्विवेचनं विना तदघटितस्य समीक्षणात्मक कार्यस्यासम्भवात्।

पदस्यार्थः पदार्थ इति व्युत्पत्तेः 'षष्ठी'[१] इति पाणिनीय सूत्रेण षष्ठीतत्पुरुष समासेन समस्यमानत्वात् घटपदादयो पदार्थवाच्याः भवन्ति। ननुपदेनार्थ इति तृतीयासमासं कर्तुं शक्यत्वात् षष्ठी समास एवकथमिति चेत्, तन्न तृतीयासमासः 'कर्तृकरेण कृताबहुलम्'[२] इति सूत्रेणविधीयमानत्वात् कर्तरिकरणे एव तृतीया समासस्य विधीयमानत्वाच्च। अपि चात्र पदार्थशब्देन समेषां पदार्थानां संग्रह कर्तृत्वात् करणार्थक तृतीया समासेन तद भावात् कर्तथक् तृतीयात्र प्राप्तित्वात् षष्ठी' इति सूत्रेण राजपुरुषवत् पदार्थशब्दस्य समासो भवतीति। विज्ञेयम्। अपि च पदस्यार्थ इत्यत्र 'कृत्' प्रत्ययानाम योगातन्न कृर्तृकर्मणो[३] कृतिरिति तृतीया 'षष्ठी'[४] शेषे इति शेष षष्ठी

---

१. सि०को०, भा०२, पृ० ३२.
२. तदेव – २,४४.
३. तदेव – १,४५२.
४. तदेव – १, ४५५.

इति निश्चीयते।

ज्ञेयत्वमभिर्धीयत्वं वा पदार्थ सामान्यलक्षणम् पदस्यार्थः पदार्थ इति व्युत्पत्याभिधेयत्वं पदार्थसामान्यलक्षणमिति लक्ष्यते।[१] इति दीपिकाकृदवचनात्। तथा च खपुष्पादिष्वतिव्याप्तीः तन्नामकपदार्थाभावेऽपि शब्दज्ञानविषयत्वस्य सत्वात्। ब्रह्मण्यव्याप्तिश्च। येद्वाचाऽनभ्युदितं येन वागम्युद्यते। तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते इति श्रुतेः। ब्रह्मण अज्ञेयानभिधेय स्वीकारात्। अतो नात्रैतल्लक्षणं सार्धुभवतीति चेत् न "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः इति पातञ्जलवचनात्। खपुष्पादीनां वस्तुरूपेणाभावेऽपि तादृशशब्दजन्यतदाकारवृत्तिसंभवेन ज्ञेयत्वस्य सत्वाद-रित्व्याप्तिवारणाय। कालसम्बन्धित्वे सतीति लक्षणे विशेषणं ज्ञेयम्। ब्रह्मण्यज्ञाननाशाय वृतिव्याप्तिरपेक्षिता। फलव्याप्यत्वमेवात्र शास्त्रकृद्भि-र्निवारिता।" इति पञ्चदशी कृदवचनात् ब्रह्मण्यपि वृतिव्याप्यत्व स्वीकृतम्। अत्र वृतिव्याप्यत्वञ्च प्रतीतिविषयत्वम्। अतःपदजन्यः प्रतीति विषयत्वम्। पदार्थ सामान्यलक्षणं निर्दृष्टम् अत्र पदजन्यत्वञ्च पदनिष्ठाजनकतानिरूपित-जन्यताश्रयत्वम्। तेन इमो घटपटौ 'इत्युच्चरिते समीपस्थो व्युत्पन्नपुरुष-स्तच्छ्रुत्वा तथोघटपटयोरवगाहनं करोति। अतस्तत्र कालसम्बन्धित्वेन पदजन्यप्रतीति विषयत्वं सिद्ध्यति। ब्रह्मणश्च वृतिविषयत्वस्य स्वीकारात् खपुष्पाद्यलीकवस्तूनामपि तदाकारवृत्तेरङ्गीकारेऽपि कालसम्बन्धित्वाभावात् नाव्याप्त्यति व्याप्तिशङ्कापि। स चात्र पदार्थो ब्रह्मैवेकं, जगत्, ब्रह्मत्युभयो

---

१. तर्क संग्रह दीपिका, पृ० १०.

वा, जगत ब्रह्म माया इति त्रयः पदार्थाः वेति चेत्, न तावत् प्रथमः। ब्रह्मैवेकं पदार्थ स्यात्तदा पदार्थलक्षणं ब्रह्मभिन्न जगतपदार्थेषु न संगच्छेत्। अपितु जगत पदार्थेष्वपि तत्लक्षणं तवर्तत जगत् ब्रह्मेत्युभावेन पदार्थस्तदा अनुभूयमान मायायाअपलापो भवेत्। न तावज्जगत् पदार्थे तस्या अन्तर्भावः जगतः निर्वचनस्य सम्भवात् मायायानिर्वचनम सम्भवाच्च। न तावत् ब्रह्मणि मायाया अन्तर्भाव ब्रह्म च चिद्रूपत्वात् सर्वाधारत्वात् प्रकाशकत्वाच्च। माया तु तदभिन्न जड़रूपस्वाच्चेतनाश्रितत्वात्तसोरूपत्वाच्चेति। अतोऽभ्युपगन्तव्यम् ....... ब्रह्म, माया, जगदित्येते त्रयः पदार्था इति। मधुसूदन सरस्वतीस्वामिपादास्तु सिद्धान्त विन्दौ दृक्, दृश्येत्युभावेव पदार्थाचिति स्वीकृत्य तथैव निरूपितवन्तः। तेषां निरूपणानुसारेण चेतनं ब्रह्म दृकत्वेन तदितिरेषी जडत्वादेव मायाऽपि दृश्यत्वेन च दृगदृश्यविभागे पर्यवस्यति। पदार्थो द्विविधः दृकदृश्यञ्च। अन्येषां वादिपरिकल्पितानां[१] पदार्थानामैत्रवान्तर्भावात्। तत्र दृशपदार्थ आत्मा परमार्थिक एकः इत्यारभ्य अविद्यातद्वाप्य तत् कर्यात्मकः प्रपञ्चो दृश्यपदार्थः।[२] इत्यन्तेन ग्रन्थावलोकनेन। न तु तर्हि जीवे जडान्तःकरणोपाधि सम्बन्धेन चैतन्यात्मकत्वाच्च तस्य जड़चैतन्य मिलितस्यैकस्याधिकतयास्वीकर्तव्यमिति चेत्। न जीवचैतन्येऽन्तःकरण सम्बन्धस्य सत्वेऽपि तत् सम्बन्धस्यासिकत्वेन स्वीकारा जीवस्य चेतनत्वेन चिद्रूपत्वात् अन्तःकरणस्य सम्बन्धमात्रेण न तस्य चैतन्यस्वरूपस्य कापिहानिर्भवति।

---

१. तर्क संग्रह दीपिका, पृ० १०.

२. सि०वि०, १३४.

अतएव निर्मलान्तःकरणस्य पुरुषस्य गुरुपदिष्ट तत्त्वमस्यादि महावाक्यजन्याखण्डाकार वृत्या परं मोक्षः सिद्ध्यतीति। एवञ्च जीवईश्वरः साक्षिरिति त्रयाणामपि दृक्कोटावेदान्तभार्वः तत्र दृक पदार्थ आत्मा[१] पारमार्थिकः एकः सर्वदैकरूपोऽप्यौषधिक भेदेन त्रिविधः ईश्वरो जीवः साक्षी चेति इति सिद्धान्त विन्दुकृदवचनात्। तत्र प्रथमं जगत पदार्थो यथा सम्भवं प्रपद्यते। तत परं ब्रह्ममाया च तत्र तत्र प्रकरणे सविस्तारं निरूपपिष्यत् इति नात्र तत्र परिश्रमः कृतः। अत अद्वैतवेदान्त पदार्थत्वेन ब्रह्ममात्रस्यैव समीक्षणं भवितव्यम्, तथापि तत् सहसा दुःखगाह्य त्वात्तदवगाहन सौकर्याय मामादयोऽपि समीक्षणविषया भवन्ति।

जगज्जन्मादिकारणत्वं ब्रह्मणः तटस्थलक्षणमीति जन्माद्यस्य[२] यतः इति सूत्रभाष्ये श्रीआचार्यपादैः प्रदर्शितम्। तच्च तदा सुस्पष्टं भवेत् यावता लक्षणघटक 'जगत' पदस्य व्याख्यानं सुनिरूपितं भवेत्। अमरकोशकारः – जगतीलोको विष्टपं भुवनं जगत[३] इति प्रतिपादितः। तत्रैव टीकाकारः पञ्चमहाभूतविषयेन्द्रियात्मकं जगत वेदान्तग्रंथे तु।

**अस्ति भाति प्रियं रूपं नामचेत्यंश पञ्चकम्।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्।।**

अनेन श्लोकेन नामरूपात्मकं जगदिति तु स्पष्टतरम्। अपि च सदैव सौम्येदमग्र आसीत् इत्यादि श्रुतिषु इदं शब्दोदितं व्याकृतमस्तित्वेन

१. सि०वि०, पृ० १३३.
२. ब्र०सू० – १,१,२.
३. अ०को० – २/१/६.

नामादियुतं जगदेवाभिधीयते। अदसस्तु सन्निकृष्टे इत्यादि वचनात् इदं शब्दप्रयोगः। सन्निकृष्टत्वेन समुपस्थितवस्तुष्वेव, प्रयोज्यत्वात्। पञ्चदशीकारोऽपि। जगद्व्याकृतं पूर्वमीमांशा व्याक्रियताधुना। दृश्याभ्यां विराडाविषु ते स्फुटे अस्य जगतो नामरूपाभ्यां व्याकृत स्थाने केकर्तृ भोक्तृसंयुक्तस्येत्याद्याचार्य-वचनाच्च इत्यादिनानाम् रूपादि व्याकृतं दृश्यपदार्थ जगत् इति निगद् व्याख्यानं कृत्वा तत् कारणत्वेन च ब्रह्मनिर्दिशति। अत्र जगत पदेन कार्यजातं विवक्षितम् इति परिभाषाकार वचनाच्च।

तच्च न केवलं चेतन्, तदा ब्रह्मव्यतिव्याप्तिः चेतनत्वा-ज्जगदधिष्ठानत्वाच्च ब्रह्म अधिष्ठानारोप्योभेदेनान्तरीकत्व नियमात्। अपि तु तद्भिन्न जड़ात्मकमेवेति निश्चिनुमस्तदुत्पात्रिस्थितिलयादिना। लोके जडस्यैवोत्पत्तिस्थितिनाशनु भूयत्वात्। जड्शब्देनात्र मायाकार्यमेव ग्राह्यम्। नो चेत् जगज्लक्षणं तत्रापि व्याप्तिं भवेत्। सिद्धान्ते ब्रह्मज्ञान नासत्वं ब्रह्माद्येयत्वं च मायायाः स्वीकृतत्वेऽपि तदुत्पत्सभावादनादित्वेन च स्वीकाराच्च न तल्लक्ष्यमीति तत् कार्यमेव जगतपदेन स्वीकर्तव्यम्। एवञ्च अनादि शून्यत्वे सति उत्पतिस्थितिनाशमद् वस्तुजगदिति। निगदितं भवति तच्च नाम-रूपात्मकमिति जगतपदार्थो व्याख्यातः। अत एवं पञ्चमहाभूतविषयेन्द्रियात्मक-मिति कोशस्योक्तिरपि साधु सङ्गच्छते। अत्र जगत् पदेन कार्यजातं विवक्षित इति वेदान्तपरिभाषाकार वचनाच्चऽविद्याधनादि पदार्थ भिन्न वस्तु जगदिति सुनिश्चितं भवति।

उत्पत्तिमद्वस्तुनोत्पादकः कश्चनावश्यं भवितव्यम् तेन विना कस्मादुत्पत्तिर्भवेत्। लोके समानात्मक वस्तुषु समानावयवावयदिषु वा जन्य

जनकभांवो दृश्यते यथा मृदान्वितकपालेभ्यो घट उत्पद्यते क्षीरादिना एवदधि जन्यते न तु नीरादिना दधि वा तंतुभ्योघटोत्पत्तिरिति।

सिद्धान्ते तु ब्रह्म शुद्ध, अपापविद्धः, शुभ्रः, अद्वितीयः व्यापकादिस्वरूपोद्य प्रत्यगात्मा सपर्यगाच्छुक्रमकायम[1] व्रणामस्नाविरं शुद्धमपाय विद्धम् इत्यादि श्रुतेः। तद्विपरीतं जगत् जड़, परिच्छिन्न उत्पत्ति विनाशरूपा नात्मा' देहेन्द्रिय प्राण मनो ह्यमात्मदयः सर्वे विकारा विषया सुप्तादयः। व्योमादि भूतान्याखिलं च विश्वं अव्यक्त पर्यन्तमिद[2] ह्यनात्मा इत्यादि विवेकचूडामणोक्तेः।

अपि तु यतो वा इमानि भूतानिजायन्ते[3] यथाक्षराद्रिवधाः सोम्यभावाः प्रजायन्ते तत्र चैवापि यन्ति[4] एतस्माज्झायते प्राणोमनः सर्वेन्द्रियाणि च खं वायुज्योतिरापि[5] पृथ्वी विवश्स्य धारिणी बहुस्यां प्रजायेयं सोऽकामयत् बहुस्यां प्रजायेय अनन्तशक्तिसम्पन्ना मायोपाधिकः ईश्वर[6] इच्छामात्रेण सृजति विश्वमेतच्चराचरम् सर्गाधकाले परमेश्वरः सृज्यमानप्रपञ्चतैचित्रय हेतु प्राणिकर्म सहकृतोऽपरिमिता-निरूपितशक्ति[7] विशेषविशिष्टमाया शक्तिसहितः सन्नाम् रूपात्मकप्रपञ्चम् इत्यादि श्रुतिस्मृतिवचनादिभ्यः एवञ्च ब्रह्म स्वप्रधान्येन जगतो

---

१. ब्र०सू० - २-१-२२.
२. तदेव - २-१-२२.
३. अद्वै०सि०, पृ० २३१.
४. पन्चद० १-१६.
५. छा०उ० - ६/२/३.
६. तै०उप० - २-६.
७. सर्व०वे०सि०सा०सं०, पृ० ५२.

निमित्तकारणं स्वोपाधि प्रधानेनोपादानकारणमिति जगतः उपादाननिमित्त-कारणं ब्रह्म साधु सङ्गच्छते। यथा लूतातंतु कार्यवत्। एतेन चेतनाज्जडोत्पत्य संभव संशयो निराकृतो वेदितव्यः सा ब्रह्मोपाधिभूतामायां शुद्धसत्वप्रधान मलिनसत्वप्रधानेति द्विधा भवति सत्वशुद्ध्यविशुद्धिभ्यां मायाविधे च ते मते। इति पञ्चदशीकारवचनात्। यदा तु तमोगुणा प्रधानमाया ब्रह्मोपाधिस्तदा ईश्वरोच्छया नेताकाशवायुरग्निरापः पृथिवीति स्थूल जगत्कारणीभूत तन्मात्राणां यथाक्रमेणोत्पत्तिर्भवति। तमः प्रधानप्रवृत्तेस्तद् भोगायेश्वराज्ञया। तमः प्रधान प्रकृति विशिष्टात्परमात्मनः। अभूत सकाशादाकाशमाकाशाद्वायु रुच्यते[१] आकाशाद्वायुः। वायोरग्नि। अग्नेराय[२] अदभ्यः पृथिवी इत्यादि स्मृतिभ्यो श्रुतिभ्यश्च। कार्यात्मकाकाशदिषु जाड्यतादर्शनात् तत् कारणीभूत आयातयः प्रधानाभवत्येवेति निश्चयः। सर्वत्रकार्यैकारणगुणदर्शनात्।

इयमेव शास्त्रग्रन्थेषु भूतसृष्टिरिति व्याख्यात्ततत्रोपलभ्यते च पश्चादुद्भूयमानो जगत भौतिकं भवति भूतानां कार्यत्वात्। ते च ज्ञानेन्द्रियाद-पादयः। तद्यथा सत्वगुणसहितो काशेत श्रौत्रेन्द्रियम्। सत्वगुणंयुक्तवायुना त्वगिन्द्रियम् सत्वगुणोपेत तेजसा नेत्र। सात्विकजलेन रसना, सात्विक पृथिव्याघ्राणेति ज्ञानेन्द्रिय पञ्चकं पृथक् पृथगुत्पन्नम्। सत्वाशे पञ्चभिस्तेषां क्रमाद्वीन्द्रिय पञ्चकम्। श्रोतृत्वगक्षिरसनघ्राणाख्यमुपजायते।[३]

---

१. स०वे०सि०सा०, पृ० ५२.
२. तै०उप०।
३. पञ्चदशी – १-१-९.

आकाशादीनां सत्वाशेभ्यो धीन्द्रियाण्यनुक्रमः ।[१] इत्यादि वचनेभ्यः इमानि ज्ञानेन्द्रियाणि पञ्चतन्मात्राणां कार्याणि सा तन्मात्रा सत्वरजस्तम् इति त्रिगुणा । त्रिगुणात्मक माया कार्यत्वात् । तत्त्वगुणोपेतैः पञ्चभूतैर्मिलतैस्तेजसमन्त करणमुपजायते तेरन्तः करणं सर्वैवृत्ति भेदेन तद्विधां आकाशादि गताः पञ्चसात्विकांशः[२] परस्परम् । मिलित्वेवान्तः करण भवत् सर्वकारणम् इत्याद्युक्तेः । प्रकाशकत्वासत्वगुणोपेतकारणजन्यमिति निश्चिनुमः । तच्चाकरणं वृत्ति भेदेन, चतुर्विधम् यथा – संशयाकारवृत्तिमदन्तःकरणं मनः ।

निश्चयाकारवृत्तिमदन्तः चित्तमिति । मनोबुद्धध्यहङ्कारश्चितं करणामान्तरम् ।[३] संशयोनिश्चयोगर्वः स्मरणं विषया इमे । संकल्पन्मन् इत्याहुर्वुद्धिरर्थस्य विश्यात्[४] अभिमानादहङ्कारश्चित्मर्थस्य चिन्तनात् मनस्तु सङ्सकल्पविकल्पनादिभिर्बुद्धिः पदार्थाध्यवसायधर्मतः । जलभिमानादहमित्य-हङ्कृतिः स्वार्थानुसन्धानगुणेन चित्तम इत्यादिवचनेभ्यः चित्ताहङ्कारयोः लिङ्गशरीरस्य स्वीकारात् बुद्धिरध्यवसायात्मक कार्यकत्री पञ्चेज्ञानेन्द्रियेण सह विज्ञानमकोशे व्यपदेश भाक् भवति । विज्ञान प्रचुरत्वात्काशवदाच्छाकत्वाच्च । कोशोऽथमहङ्कारवृत्ति मत कर्तृत्वलक्षण सर्वसंसारनिर्वाहकः । सुखीदुखीत्यादि व्यवहारवांश्चेति यदा तु एतानि ज्ञानेन्द्रियाणि संकल्पात्मकवृत्तिमतमनसोपयुक्ते तदात्मनः प्राचुर्यात् मनोमयकोश इति व्यपदेदशो भवति अयमेव मैनोमयकोशः

---

१. स०वे०सि०सा०सं०, पृ० ५२.
२. तदेव, पृ० ५२.
३. वेदा०परि०।
४. सं०वे०सि०सं०।

बहिरन्तः स्थानां पदार्थानान्जीवस्यावगमयति बन्धमोक्षं प्रतिमन एव कारणञ्च एव मनुष्याणां कारणं।[१] बन्धमोक्षयोः इत्यादि स्मृतिभ्यः। अत एव साधना-परनाम्नः करणेति च शरीरान्त वर्तते इत्यन्तः करणेति नाम्ना च प्रसिद्धौ लोके। यदा पुनः पृथक् पृथक् पञ्चतन्मात्रा रजोगुणोपसिकता तदा तेभ्यो वाकपाणिपादयायूपस्थारथानि कर्मेन्द्रियायुदभवन्ति। पन्चानामेव भूतानां रजोशेभ्योऽभवन्क्रमात्[२] वाक् पाणिपाद पायूपस्थानि कर्मेन्द्रियाण्यनु रजोशेः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि[३] तु वाक्याणिपादपायूपस्थाभिद्यानानि जज्ञिरे इत्यादि वचनेभ्यः वचनादागमेन विसर्गानन्दाः तेषां कर्माणि पञ्चोक्त्यादान-गमनविसर्गानन्दकाः[४] क्रिया इत्युक्तेः।

रजोगुणोपासिक्त पञ्चतन्मात्रसंघातेन क्रियात्मकप्राणापानव्यानोदान समानेति पञ्चविधभेदान्मकवायुरूपजायते। तैः सर्वैः सहितैः प्राणौ वृत्तिभेदात्स पञ्चधा।

प्राणोऽपान[५] समानश्चेदानव्धानौ च ते पुनः। समस्तेभ्यो व्योमादीनां क्रियात्मकाः। प्राणादयः[६] समुत्पनाः पञ्चाप्यान्तर वायवः इत्यादि स्मृतिभ्यः। स वायुहृत्पदारभ्य मुखनासिका पर्यन्तं प्राक्गमनात्मकक्रियावानित्ति प्रभाः नामेरधोऽवाग्गमनेनापान इति नाम्ना प्रसिद्धः शरीरे सर्वत्र गमनवान्वा-

१. मनुस्मृति।
२. स०वे०सि०सं० श्लोक-३७५.
३. पञ्चदशी १/२१.
४. पञ्चदशी २/१०.
५. पञ्चदशी १/२२.
६. स०वे०सि०सा०सं०, श्लोक ३७३.

युयव्यान: । ऊध्वगमवान उदान: । भुक्तान्तादीनां समीकरणकर: समान इति तत्तत् क्रिया भेदेन पञ्चनाम्ना पञ्चप्राणा: इति प्रसिद्धिं गता: 'प्राणा: प्राग्गमनेनस्यादपानौऽवाग्गमनेन[१] च। व्यानस्तु विश्वगमनादुत्क्रान्त्योदान इण्यते। अशितान्नरसादीनां समीकरण धर्मत: समानइत्यभिप्रेत: इत्यादि स्मृतिभ्य: । एतत् प्राणादि पञ्चकं कर्मेन्द्रियै: सहितं सत् प्राणभयको शोभवति। क्रियात्मकत्वादयं रजोगुणकार्यमितिनिश्चीयते कर्मेन्द्रियै: पञ्चभिरन्वतो[२] ऽयंप्राणोभवेत् प्राणमयस्तु कोश: इत्यादिवचनेभ्य: । एतेषां पञ्चज्ञानेन्द्रिय:, पञ्चकर्मेन्द्रिय, पञ्चप्राणमनोबुद्धिनां संघात: लिङ्गशरीरमित्युच्यते। तदेव शरीरंसकृतपुण्यापुण्यकर्मणां फलभोगभाक भवति। सूक्ष्मशरीरमिति चास्यैवापरनाम्। बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मन साधिपा।[३] शरीरं सप्तदशभि: सूक्ष्मं तल्लिङ्गमुच्यते। कोशत्रयं मिलित्वैतद्वपु:स्यात्सूक्ष्ममात्मन: ।[४] एतत् कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते।[५] इत्यादिवचनेभ्य: सर्वाणि लिङ्गशरीरराणिसमूहात्मकतया। कस्य हिरण्यगर्भस्य ज्ञानविषयत्वेन समष्टि......। यथा वृक्षाणां समहो एकबुद्धिविषयत्वेन वनमिति तदवत्। समष्टि: स्यात्तरूगण: सामान्येन[६] वन यथा। एतत्समष्ट्युपहितं इत्यादिवचनादीनि समष्टि विषये प्रमाणानि भवन्ति। इदमेव लिङ्गशरीरमनेक बुद्धिविषयो यदा भवन्ति तदाव्यष्टिरिति कथ्यते यथाऽनेकबुद्धिविषयत्वेन वृक्षा इति तद्वत्। एतद्व्यष्ट्युपहित चेतनं

१. स०वे०सि०सा०सं०, श्लोक ३७७.
२. वि०चू०आ० १६७.
३. पञ्चदशी १/३३.
४. स०वे०सि०सा०सं०, पृ० ६०, श्लोक ३८५.
५. वेदान्तसार, पृ० ३३.
६. स०वे०सि०सा०सं०, श्लोक ३८७.

तैजसमिति व्यवह्रियते जन्यैः समष्टिकाले हिरण्यगर्भः सर्वेषां लिङ्ग-शरीरोपाधिकानाम् तैजसानां स्वात्मना सहेकत्व ज्ञानवान् भवति। व्यष्टिकालेऽनेक बुद्धिविषयत्वात् जीवावस्थानात् हिरण्यगर्भाभावाच्च तेन सह स्वात्मतादात्म्य ज्ञानाभावाच्च तयोर्व्यष्टि समष्टिरितिविवेकः। समष्टिरीशः सर्वेषा स्वात्म तादात्म्यवेदनात्[1] तदभावात्ततोऽन्ये तु कथ्यन्ते व्यष्टिसंज्ञयौनैकधीविषयत्वेन लिङ्गव्यष्टिर्भवत्यथा। एतद्व्यष्ट्युपहितं चिदाभासं समन्वितम्। इत्यादिवचनेभ्यः। अयमेव समष्ट्युपाधिको ईश्वरः सुवर्णमय धीगर्भे प्रकाशतीति हिरण्यगर्भ इति मालायां मणिषु मध्ये सर्वत्र वर्तमानसूत्रमिव समस्तलिङ्गशरीरेषु व्याप्यत्थि-तत्वाच्च सूत्रात्मा इति च कथ्यते पण्डितैः। हिरण्यमये बुद्धिगर्भे प्रचकास्ति हिरण्यवत्। हिरण्यगर्भ इत्यस्य व्यदेशस्ततोमतः। [2]समस्तलिङ्गदेहेषु सूत्रवन्मणिपङ्क्तिषु इत्याचार्यबचनेभ्यः। तद्वत् व्यष्टिलिङ्शरीरोपहितात्मा तैजस इति तेजोमयान्तः करणोपाधितेन व्यवहारो भवति। चैतन्यं तेजस इति निगदन्तिमनीषिणः। तेजोमयान्तः करणोपाधित्वेनैष तेजषः इत्यादिवचनेभ्यः। एवं सूक्ष्मप्रपञ्चो निरूपितः प्रत्यक्षेणानुभूयमानास्थूल जगत् स्थावरजङ्गमात्मकं केनकारणेनोत्पत्नमिति जिज्ञासा भवत्येव स्थूलजगति पृथिव्यादि भूतपञ्चके प्रत्येके स्वेतरगुणाऽपि दृश्यन्ते। तद्यथा जले रूप, रस शीतस्पर्शादयः। वायो शब्द स्पर्शादिगुणौ। एवं क्रमेण पृथिव्यां शब्दादयः पञ्चगुणा उपलभ्यन्ते। यदि पञ्चतन्मात्रेभ्यो स्थूल जगदुत्पत्तिस्यात्तदा जगति वर्तमाने तेषां कार्येष्व-प्येकैकगुणोपभोगात्मकसाधुत्वं जायते तादित्थम्।

---

१. पञ्चदशी १/२५.
२. स०वे०सि०सा०सं०, श्लोक ३८९.

ताः तन्मात्रा पुनर्यदा पञ्चीकृता भवन्ति, ताभ्यः उत्पतेषु कार्येषु पञ्चभूतगुणोपलब्धि सत्वे किमपि नाश्चर्यम्। अतस्तत् पञ्चीकरणं वक्तव्यम्। आकाशदि पञ्चतन्मात्राणां समद्विधा विभज्य प्रथमार्धभागं व्यक्तवाद्वितीयभागस्य पुनः चतुर्धाविभागो विधयः। ततः प्रथम पञ्चभागेभ्यः प्रत्येकं स्वस्वांशं विहायान्यभूतैः सहचतुर्णां भागानां सम्मेलनं कर्तव्यम्। एवं कृते पञ्चभूतानां पञ्चीकरणम् भवति।

द्विधाविधाय चैकेकं चतुर्धा प्रथमं पुनः[१] स्वस्वेतर द्वितीयांशयो जना पञ्च पञ्चते। खादीनां भूतमेकैकं स्ममेव द्विधा द्विधा। विभज्यभागं तत्रायं त्यक्त्वा भागं द्वितीयकम्। चतुर्धा सुविभाज्याथ तमैकेकं विनिक्षि चेत्।[२] चतुर्ण प्रथमोभागे क्रमेण स्वार्थमन्तरा इत्यादिना श्रीभाष्यकारो विद्यारण्य-मुन्नीवर्यैश्चोक्तत्वात्।

वेदान्ताचार्यङ्गीकृतषड्विधप्रमाणैर्न स्वीकृतमिति तत्राप्रमाण्य-शङ्काऽपि न कार्या। से यं दैवतैक्षत् हन्ताहमियास्तिस्त्रो देवता[३] अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरणणीति तासां त्रिवृत्तं त्रिवृत्तमेकैकां करणाणीति सेयं देवतेमास्तिस्त्रो देवता।[४] शब्देन तेजोऽवन्मानं त्रिवृत्तकरणेन जगदभिव्यक्तिः श्रूयते। तत् त्रिवृत्तकरणं पञ्चीकरणस्योपलक्षणमिति पञ्चीकरण श्रुति प्रमाणसिद्धं भवति। अन्यत्र तस्माद्धा एतस्मादात्मन आकाशः संभूतः।

---

१. पञ्चदशी, १/२७.
२. स०वे०सि०सा०सं०, श्लोक ३९८.
३. छा०उप०, ६/३/२.
४. तदेव, ६/३/३.

आकाशाद्वायुः। वायोरग्निः अग्नेरापः। अद्भ्यः पृथिवी इत्यादिषु पञ्चभूतानामुत्पत्तिः श्रूयते। तेषामुत्पत्तिः श्रुति सिद्धत्वात् पञ्चीकरणामापि तत् सिद्धमिति भवत्येव। लोके सर्वत्रकार्येषु कारणगुणानामनुवर्तनं दृश्यते। अतः भौतिकजगति पञ्चभूताशेनोपलब्धिस्तेषां पञ्चीकरणं विनाऽनुपपन्ना इति। पञ्चीकरणस्य स्वीकारभावे प्रत्यक्षादिविरोधाच्चेत्यागामार्घापत्यादीनां प्रमाणानां सत्वे कथमपि पञ्चीकरणां प्रामाणयाशङ्कां न कार्याकृते पञ्चीकरणेऽप्याकाशादिषु तत्तद्व्यवहार आकाशाद्यंशवाहुल्यादिति। श्रीशंकरभगवत्योदरपि वैशेष्यात्तु तदवादस्तदवादः। इत्यस्य सूत्रस्य व्याख्यानायवसरे तस्मात् सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोऽवन्न विशेष्यवादो भूतभौतिकविषय उपपद्यते इत्यादिना सुस्पष्टं प्रतिपादितम् त्रिवृत्ते कृतेऽपि तेजो द्वये तदविशेषणात् तेज आप इत्यादि व्यवहारः। तदुपलक्षणेन पञ्चभूता दिष्वपि पृथिवीत्यादि व्यवहारः समानमेवेति सर्वमति रोहितार्थः।

ततस्त्रेश्वरे क्षणेन तेभ्यो चराचरात्मकमण्डमिवाण्डं ब्रह्माण्डं समुत्पन्नम्। तदेक्षत् बहुस्यां प्रजायेये। सोकामयत् बहुस्यां प्रजायैय पञ्जीकृतेभ्यः खादिभ्यो भूतेभ्यस्त्वीक्षये शितुः। समुपन्नमिदं स्थूलं ब्रह्माण्डं स चराचरम् इत्यादि श्रुतिश्यः आचार्यवचनाच्च। तदैक्षत् बहुस्यां प्रजायैयेति तत्तेजोऽस्रजत्। इति श्रुतौ तेज आदि तन्मात्राण्य पीश्वरेक्षणपूर्वकसृष्टिः संजातेति श्रूयते। आचार्यवचने तु पञ्चीकृत भूतेभ्यः इक्षणपूर्वक ब्रह्माण्डोत्पत्तिरिति विरुद्धत्वात् कथमेकवाक्यता इति चेत्। सिद्धान्ते निखिलजगदुपादानकारणं ब्रह्म तच्चविवर्तरुपेण। विवर्तत्वञ्च उपादानविषम सत्ताककार्यत्वम्। एवं रीत्या ईक्षणपूर्वक ब्रह्माण्डदीनां सृष्टिः साधुसङ्गच्छते अथवा ईश्वरेक्षणपूर्वकं सृष्टिः

सप्तदशावयवोपेतालिङ्ग शरीणां पन्चतन्मात्राणां हिरण्यगर्भस्थूल शरीरस्येति। एतदन्य समस्त प्रपञ्चोत्पत्तिर्हिरण्गर्भादिद्वारा इति समस्या समाधानम्। हन्ताहमिमे मास्तिस्तौ देवता अनेनजीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरणाणि इति श्रुतेः।

स च हिरण्यगर्भोमूर्तित्रयादन्यो आदि जीवः हिरण्यगर्भः समवर्तत्राग्रे। इति श्रुतेः। तच्चाण्डं भूम्यन्तरिक्षोर्ध्वलोक सप्तकमतलवितल सुतलाद्यधोलोकसप्तकात्मकं चतुदर्श भुवनात्मकम्। तेन जरायुजाण्डजस्वेदजोद्भिज्जारथ चतुर्विधस्थूलशरीराणाव्रवीह्यादि तेषामन्नानाञ्च यथायथमुत्पत्तिजीता। समुत्पन्नमिदं स्थूलं ब्रह्माण्डं सच राचराम् ब्रीह्यादयोषधयः सर्वाः। जयायुजाण्डज स्वेदजोदिभज्जाद्याश्चतुर्विधाः। स्वस्वकर्मानुसारेण जातास्तिष्ठन्ति जन्तवः इत्याद्याचार्यवचनेभ्यः।

तत्रमनुष्यपश्वादयो जरायुजाजरायुभ्यो जातानीति व्युत्पत्तेः। पक्षिपन्नग शरीराणि अण्डजानि। अण्डावस्थानन्तरमेव तेषां तत्तत् शरीराणामुत्पत्ति सम्भवात। मूसकमशकादयो स्वेदज इति गीयते। स्वेदात समुत्पन्न शरीरात् वृक्षादयो उदधिज्जा भवन्ति। भूमिमृदछायोत्पन्नत्वात्। वृक्षादीनां शरीरमेवेति विवदितव्यम्। भोगायतनं शरीरम्। तेषां पापफलोपभोगत्वेन, प्राणवायुसेवनेन च चेष्टाश्रयात्मकं शरीरत्वं सिद्ध्यति।

जगदेतत् ब्रह्मकार्यम्। स्रष्टुः सज्यमान विषयनामरूपयोः प्रथमं बुध्यारोहात् लोके घटादीनां चिकीर्षु कुलालादय प्रथमं स्वबुद्धौ नामरूपादिन आकलयेन तथैव मृत्तिकया सृजतीतिमूलकारणमपि नामरूपाभ्यां स्वबुध्यारूढं

सृजति, सृष्टत्वात् कुलालवत्। एतेन जगत् बुद्धिमच्चैतनकार्यमिति लभ्यते। न च जीवकार्यत्वं शङ्कनीयम्। तदा तु कर्तृत्वम् भोक्तृत्वविशिष्टानां नामरूपात्मकनां सर्वजीवानां कार्यान्तः पतित्वानुपपत्तेः। तच्च न कस्यापि सहम् अतोजगन्न जीवकर्तृकमिति।

तच्च जगदनेकरूपम्। यथा – केचित्कर्तारो भवन्ति। यथा श्राब्दादिषु पित्रादयः। कृष्णभृगादयः ढालु प्रतिनियतदेशोत्पादाः। केचित्खलु प्रतिनियत् कालोत्पादाः यथा कोकिंलतादयाः। केचित् प्रतिनियतनिमिताः बलाका गर्भादयः। केचित् प्रतिनियेत् क्रिया ब्राह्मणानामेव यजनादयः प्रतिनियत फलं ब्रह्मलोके सुखं नरके दुःखम् एतादृशं विचित्रतया चित्रतं जगत् मनसाव्यचिन्त्यरचनात्मकं यथा एकस्या अपि शरीर रचनाया विविध-नाडी जालास्थिमज्जामासांदि सन्निवेशविशिष्टायां रूप चिन्तयितुं न शक्यं तदवत्। एतत सर्व सूत्रात्मकेन वाक्येनाह भगवान् भाष्यकारः अस्या जगतो नाम रूपाभ्यां व्याकृतस्यानेक[१] कर्तृभोक्तृ संयुक्तरूप प्रतिनियत देशकाल निमित्त-क्रिया फलाश्रयस्य मनसाप्यचिन्त्य रचनारूपस्य जगतः इत्यनेन।



---

१. ब्र०सू०भा० १/२.

# चतुर्थोऽध्यायः

## विद्वन्मनोरञ्जनीटीकायाः समीक्षणम्

चिकीर्षितस्य गन्थस्याविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टाशिष्टाचारानुमितस्मृतिपरिकल्पित श्रुतिबोधितकर्तव्य व्यताकं स्वाभिमतदेवतातत्वानुसन्धानात्मकं मङ्गलमाचरत्यखण्डेत्यादिश्लोकेन आत्मानमाश्रय इत्यन्वयः। यद्यपि ग्रन्थकरणादिकार्यारम्भे गणेशसरस्वत्यादिदेवताभेदं विघ्नविधातविद्यास्फूर्ति प्रदत्वेन प्रसिद्धमनुसन्धानं कुर्वन्ति शिष्टास्तथापि 'एष ए ह्येव सर्वेदेवा' इति श्रुतेरात्मन एव सर्वदेवतात्मकत्वावगमादात्मानुसन्धाने सति सर्वदेवतानुसन्धानं सम्भवतीति मन्यते ग्रन्थकारः आत्मानं विशुद्धचिद्रुपं त्वम्पदलक्ष्यं तुरीयमाश्रये शास्त्राचार्यप्रसादाभिव्यक्तमनुसन्दधे। अस्यात्मनस्तत्पदछलक्ष्यपरमात्मानन्यत्वं वाक्यार्थ कथियतुं तत्पदार्थ शोधयति अखण्डसच्चिदानन्दमिति "आनन्दादयः प्रधानस्य"[१] इतिन्यायेन सत्यंज्ञानमनन्तं ब्रह्म "विज्ञानमानन्दं ब्रह्म"[२] इति श्रुत्योः परस्परैकवाक्यतामभिप्रेत्याखण्डेयादिभिरानन्दयपदस्य समासः। अखण्डशब्दोऽनन्तपदपर्यायः स चाविद्याध्यस्तदेशकालवस्तुभ्यः परमात्मनः परिच्छेदं व्यावर्तयत्येव नञ् पदयोगात्। तदुक्तम् — "तत्रानन्तोऽनन्तवद्वस्तुव्यावृत्यैव विशेषणम्।"[३]

---

१. तै० उप० - २/१. २. बृ०उप० - ३-९-१०.
३. वे०विद्व०टीका०, पृ० १.

परिशिष्टौ सत्याज्ञानशब्दावित्यर्थः। अखण्डमपि तदनृतं शून्यं वा स्यादित्यत आहसदिति। सदनृतशून्यव्यावृतं बाधाभावोपलक्षितस्वरूपत्ता-त्मकमिति यावत्। ब्रह्मणोऽप्यनृतत्वे निरधिष्ठानारीपप्रसंगात्। शून्यस्य ससाक्षिकत्वे तुसर्वशून्यवादानुपपत्तेरसाक्षिकत्वे तदसिद्धेःस्वप्रकाशत्वे च ब्रह्मण एव नामान्तरत्वापत्तेनं ब्रह्मानृतं शून्यं वेत्यर्थः। अखण्डं सदपि तत्तमोवज्जडं किं न स्यादित्यत आह चिदिति श्रुतौ ज्ञानं ब्रह्मेति सामानाधिकरण्याद्गुणत्वे तस्य तदनुपपत्तेः। न च शुक्लो घट इतिवतत्स्यादिति वाच्यं निर्धर्मकत्वप्रतिपादका स्थूलादिश्रुतिविरोधात्। किञ्चज्ञानस्यनित्यत्वेऽग्न्युष्णवत्सवितृप्रकाशवच्च ब्रह्मस्वाभावततिकेरात्। अनागमायायि धर्मस्य धर्मिणः परमार्थतोभिन्नत्वे प्रमाणाभावात् अनित्यत्वे ज्ञानानवस्थाप्रसंगात्। कार्यस्य सतो ज्ञानस्यापि कार्यान्तरवत्स्वोपादानगोचरापरोक्षज्ञानजन्यत्वात्। तथा च सिद्धा ब्रह्मणोज्ञान-स्वभावता। एतेनजीवात्मनोऽपि ज्ञानस्वभावता व्याख्यता वेदितव्या स्वप्रकाशं चैतद्ब्रह्मैष्टव्यमप्रकाशजडविलक्षणत्वनिर्देशसामर्थ्यात्। 'तदेव ज्योतिषां ज्योतिः' 'तस्य भाषा सर्वमिदं विभाति' इत्यादिश्रुतेः। नन्वेवमखण्डसच्चिद्रूपमपि ब्रह्म न प्रेक्षावत्प्रेप्सागोचरं सुःखदुःखाभावतत्साधानानामन्यतमत्वाभावात्। न तावत्सवसुखदुःखाभावसाधनं ब्रह्म स्वस्मिन्सुखदुःखयोर्नित्यनिवृतत्वात् "अशरीरंवाव सन्तं न प्रियाप्रियेस्पृशत्" इति श्रुतेः। नाप्यन्यगतसुखादिसाधनं ब्रह्म। अन्येषां दृष्टादृष्टसुखदुःख प्राप्तिपरिहारयोलौकिक वैदिकसाधनेभ्य एव सिद्धेः। तस्मान्न सुखदिसाधनं ब्रह्म। नापि दुःखभावरूपं भावात्मस्वभावता-विरोधात्। नापि सुखात्मकं तथात्वे प्रमाणाभावादित्यत्। आनन्दं सुखरूपम्। न च ब्रह्मण आनन्दात्मत्वे प्रमाणाभावाद् विज्ञानमानन्दं ब्रह्म आनन्दो ब्रह्मेति

व्याजानात् — आनन्दरूपममृतं यद्विभाति "कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् इत्यादिश्रुते प्रमाणत्वात् न चानन्दब्रह्मणोधर्मर्मिताशकांप्यव-काशं लभते श्रुतिस्वारस्य भगंप्रसगांत्। न च ब्रह्मण ईश्वरस्य सुखित्वं परैर-पीष्यतेऽत आनन्दो विद्यतेऽस्मि नित्यानन्दं ब्रह्मेति परेषां श्रुति व्याख्यानमुप-हासास्पदमेव। न च ब्रह्मण्यानन्दशब्दो दुखाभावपरः आनन्दो ब्रह्मेति व्यजानात् इति भावरूपब्रह्मसामानाधिकरण्य निर्देशविरोधात्। न च प्रियास्पर्शित्वश्रुति-विरोधस्तस्याः श्रुतेवैषयिकप्रीतिनिषधपरत्वादिति भावः। यद्यप्यात्मपदमेवेह शेषिपदं तथापि श्रुत्युपरोधात्पदार्थशोधनार्थतया च ब्रह्मपदमध्याहृत्य विशेष्यं बोद्धव्यम् एवं सत्यखण्डं सच्चिदानन्दं ब्रह्मात्मानमाश्रय इति ब्रह्मात्मपदयोः समानाधिकरण्येन तत्वम्पदार्थयोरैक्यवाक्यार्थो ब्रह्मत्वपरोक्ष्यनिवृत्या परिपूर्णतया निरूपितः स्यान्नान्यथा एतेषां च पदानां ब्रह्मपदेन प्रत्येक प्रथममन्वितानां पश्चात्समानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः। "अरूणयां पिगांक्ष्य गवैकहायन्या सोमं क्रीणाति" इत्यत्र क्रयवाचिपदान्वितानामरूणादिपदानामिव परस्परान्वयः न चैकार्थत्वे सत्यादिपदानां पर्यायतापत्तिरयौगपद्यं चेति वाच्यं प्रवृत्तिनिमित भेदाद् व्यावतर्यभेदाच्चोक्तदोषानवातारात एवमन्योऽपि वाक्य-विचारोपयोगि न्याय ऊहनीयो विस्तरभयान्नेहलिख्यते एवं विधिमुखेन परिच्छिन्नानृतऽदुःखरूपानात्मतद्धमविलक्षणं ब्रह्मेति निरुप्येदानी। "यतो वाचो निर्वतन्ते अप्राप्य मनसा सह" इत्यादि श्रुतिमाश्रित्य निषेधमुखेन सकल-निषेधावधिभूतं सत्यस्य सत्यं ब्रह्मेतिदर्शयति। अखिलस्याकाशादिप्रपञ्चस्याधार आश्रयस्तदिति विग्रहः। आश्रयशब्द सृष्टिप्रलययोरप्युपलक्षणार्थः तथा च श्रुति "यतो वा इमानि भूतानि जायन्ते" ततश्च जगदुत्पत्तिस्थितिलयकारणं

ब्रह्मेत्युक्तं भवति अत इदं फलितम् सत्यंज्ञानानन्तानन्दैकरसं ब्रह्म तत्पद-लक्ष्ममिति। आत्मपदादेवं त्वम्पदार्थशुद्धिः। "आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति" इतिश्रतावात्मशब्दस्य निर्विशेषप्रत्यक्चैतन्यमात्रनिष्ठताया निर्धारितत्वात्। तथा च ब्रह्मात्मपदयोः सामानधिकरण्यादैक्यवाक्यार्थ सिद्धिरित्युक्तं तदेव वाक्यार्थभूतमात्मानमाश्रये किमर्थम्। अभीष्टसिद्धये। अभीष्टं शास्त्रर्थाप्रतिपत्यन्यथा प्रतिपत्तिविप्रत्तिनिरासलक्षणं यथाशास्त्रमर्थ सङ्ग्रहसामर्थ्यलक्षणं च तस्यसिद्धि सम्पत्तिस्तस्यै तदर्थमित्यर्थः।

ब्रह्मात्मप्रतिपत्तिपरेषु श्रुतिसूत्रेषु विद्वन्निर्मितनिबन्धेषु चाविशेषेण वेदान्तशब्दस्य लोके प्रयोगदर्शनात्सर्वत्र मुख्यवृत्तित प्रतीतिं वारयन्मुख्यगौण भेदेन वेदान्त-शब्द व्युत्पादयति वेदान्तो नाम इत्यादिना। उपनिषच्छब्दो ब्रह्मात्मैक्यसाक्षात्कारविषयः। उपनिपूर्वस्य क्विप्प्रत्यान्तस्य षद्लृविशरण-गत्यावसादनेष्वित्यस्य धातोरूपनिषदिति रूपम्।

तस्माद्ब्रह्मविद्यास्वसंशीलिनां संसारसारतामति सादयति विषादयति शिथिलयतीति वा परमश्रेयोरूपं प्रत्यगात्मानं सादयति गमयतीति वा दुःख-जन्मप्रवृत्यादिमूलाज्ञानं सादयत्युन्मूलयतीति वोपनिषत्पदवाच्या। सैव प्रमाणम्। तस्याः प्रमारूपायाः करणभूतः सर्वशाखासूत्तरभागेषु पठ्यमानोगन्थराशिरप्युप-चारात्प्रमाणमित्युच्यते। तथा चोपनिषद्ः प्रमाणं प्रभाकरणमुपनिषत्प्रमाणं वेदान्त इत्यर्थः।

शरीरमेव शरीरकं तत्र भावो जीवः शारीरकः स सूत्रयते याथा-तथ्येन निरूप्यतेयैस्तानि शारीरिकसूत्राणि 'अथातोब्रह्मजिज्ञासा' इत्यादिनि।

यद्वा शारीरकस्य सूत्राणि तद्याथात्म्यवादि वेदान्तार्थसंग्रहवाक्यानि। आदिशब्दो भाष्यादिसंग्रहार्थः। च शब्दो वेदान्तशब्दानुषगांर्थः। तथा च वेदानामन्तोऽवसानभागो वेदान्त इति व्युत्पत्तियोगान्मुख्यो वेदान्तशब्दो वेदभागभेदेषु शारीरकादौ तूपचरित इति व्युत्पादितः। ननु किं पुनरस्य ग्रन्थस्यारम्भे निमित्तम्। न खलु निर्निमित्ता प्रेक्षावत्प्रवृत्तिरिति चेत्को भावः। निमित्तमात्राक्षेत्र इति चेन्न।

ननु महाविषयदेरिह शास्त्रीयत्वेऽप्यवान्तरविषयादेः पृथगालोचनमुचितमितरथा शास्त्रं परित्यज्यप्रेक्षावतोऽत्र प्रवृत्त्ययोगादितिचेद्वाढं प्रकरणत्वेनैवावान्तरसंगतेः। सुलभालोचनत्वात्पृथगिह निर्देशानपेक्षणात्। तथाहि सारग्रहणेच्छुरवान्तराधिकारी। सगुणनिर्गुणरुपविषयभेदं परित्यज्यनिर्गुणसारमात्तमिह विषयः। तन्मात्रावधारणमवान्तरप्रयोजनम्। सम्बन्धोऽपि विषयानुरूप इति भावः। ननु शास्त्रीयोऽनुबन्धः शास्त्रविद्भिरेव विज्ञायते न व्युत्पित्सुभिस्तत्कथमिह तेषां शास्त्रत्रीयविषयाद्यनभिज्ञानां प्रवृत्तिरित्याशंकयाशास्त्रीयमेवानुबन्धं संक्षेपतो व्युत्पादयितुमुपक्रमते तत्रानुबन्धो नाम इत्यादिना तत्र वेदान्तशास्त्रे स्वार्थप्रतिपत्तारमनोश्रित्य शास्त्रस्य प्रवृत्त्ययोगाददावधिकार्यनुबन्धापेक्षा। तस्य च विषयबोधमन्तरेणा प्रवृत्तेविषयस्य तदानन्तर्यम्। विषयस्य च शक्यप्रतिपाद्यत्वसिद्धये सम्बन्धस्य विषयानन्तर्यम्। प्रयोजनस्य चरमत्वं प्रसिद्धमित्युददेशपाठक्रमो विवक्षितः। तथा च शारीरिकसूत्रं अथातो ब्रह्मजिज्ञासा।

काम्यादिपदार्थान कथयति — काम्यानीत्यादिना फलोद्देशेन विधीयमानानि कर्माणि काम्यानि न च "विश्वजिता यजेत" इत्यादावव्याप्ति-

स्तत्रापि ''स स्वर्गःस्यात्सर्वान्प्रत्य विशिष्टत्वात् इतिन्यायेन स्वर्गफलोद्देशेन विधेसाधितत्वात्। नरकादीत्यादिपदादैहिकदुःखग्रहः। ब्राह्मणह्ननादीत्यादिपदात्सुरापानादिग्रहः प्रत्यवायशब्देनागामि दुःखमुच्यते। येषामकरणे विज्ञायमानो तत्साध्यते ज्ञाप्यते तानि।

सन्ध्यावन्दनादीनि इत्यादिपदात्पञ्चमहायज्ञादिग्रहः। निमित्तमात्रमासाद्यावश्यकर्तव्यतया विहितानि नैमितिकानि। एतदाह पुत्रेति। जातेष्टिर्नाम ''वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जातेइति विहिता। प्रायश्चित्तानि पापक्षयमात्रोदेशेन विहितानीति वा आदिपदात्कृच्छादिग्रहः। शास्त्रबोधिते सगुणे ब्रह्मणि दीर्घकालादरनैरन्तयोपेतमनो वृतिस्थिरीकरण लक्षणानि उपासनानि। शाण्डिल्यविद्यानाम ''सर्वखल्विदं ब्रह्म'' इत्युपक्रम्य ''स क्रतु कुर्वीत मनोमयः प्राणशरीरो भारूप'' इत्यादिना छान्दोग्येविहिता वाजिनामग्निरहस्याख्येऽपि काण्ड ''स आत्मानमुपासीतमनोमयं प्राणशरीरं इत्यादावुक्ता।

साधनसम्पन्नः प्रमाताधिकारीत्युक्तं तत्र कानि साधनानि क्रियन्ति वेत्यपेक्षायां तानि विभजते साधनानीति। नित्यानित्यवस्तुविवेकस्तावदित्यादिना नित्यत्वं नाम कालानवच्छिन्नत्वमनित्यत्वं नाम तद्विपरीत्वम्। न स्थास्यतीति लोकागमयो व्यवहारायोग्यं नित्य तद्विपरीतमनित्यमिति वा तथा च नित्यानित्ये च ते वस्तुनी च नित्यानित्यवस्तुनी तयोर्विवेक इति विग्रहः।

मुमुक्षुत्वमिति। मोक्षो नाम विद्यानिरस्ताविद्यातत्कार्यब्रह्मात्मनावस्थानम् तद्विषयेच्छा मोक्षेच्छा तद्वत्वं मुमुक्षुत्वमित्यर्थः।

तृतीयमनुबन्धमाह – सम्बन्धस्त्विवति। तदैक्यं प्रत्यग्ब्रह्मणोरैक्यं

तच्च तत्प्रमेयं चेति तथा तस्मेति विग्रहः।

चरममनुबन्धमाह प्रयोजनम् त्विति। तदैक्यप्रमेयशब्दः पूर्ववत् अज्ञानं वक्ष्यमाणलक्षणम्। तस्य निवृत्तिः प्रयोजनमित्येतावत्युक्ते समूलः दुःखोन्मूलनलक्षण वैशेषिकाभिमत प्रयोजनमभ्युपगत प्रतिभायात् साधन-चतुष्यसम्पन्नस्याधिकारिणो विज्ञातविषयादिमत् आत्मयाथात्म्यजिज्ञासया गुरुपसत्ति दर्शयति अययधिकारीति जननमरणादीत्यादिपदाद्रागद्वेषादिग्रहः संसारानल-सन्तप्तो गुरुमुपसृत्य तमनुसरतीत्यन्वयः। उपसरणं समीपगमनमनुसरण-मनुवृत्तिरिति भेदः। अत्युद्विग्नस्याविलम्बने तच्छान्तिकरस्थानप्रवेशे दृष्टान्तमाह प्रदीप्तेति।

उपहारपाणिरिति उपहार उपायनं पाणौ यस्य सः श्रोत्रियं ब्रह्मनिष्ठमिति गुरोर्विशेषणे श्रोत्रियत्वं वेदवेदांगपारगत्वं वेदान्तार्थपारगत्वं वा प्राकृतोपयोगात्। संस्कारजन्यो हि भ्रमस्तत्सिद्धये। पूर्वप्रतीतिमात्रपपेक्षते न पुनः पूर्वप्रतीतस्य परमार्थसत्वमपि व्यतिरेका भावात् संशयविपर्यदृष्टेष्वपि संस्कारकार्यस्मृतिदर्शनात तथा हि लोकोऽनुभवोऽस्मिनबल्मीककूटे मम पुरा-स्थाणुः पुरुषो वेति सन्देह आसीदस्मिञ्छुक्तिशकले रजतमिदमिति भ्रम आसीदित्यादिः न च संशयविपर्ययोरेवेयं।

ज्ञानविरोध्यज्ञानमित्युक्ते ज्ञानप्रागभावे प्रसंग व्युदस्यति भाव-रूपमिति उत्तरज्ञानविरोधिपूर्वज्ञानव्युदासाय सद्सद्भ्यामनिर्वचनीपमिति। यद्वा ज्ञानविरोधित्वं ज्ञानापनोद्यत्वं तदेवाज्ञानत्वमित्यज्ञानलक्षणम्।

गुणा लोहितशुक्लकृष्णा अज्ञानकार्येषु तेजोबन्नेष्ववान्तरप्रकृतिषु

प्रसिद्धाः यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपायत्कृष्णं तदन्नस्य इति श्रुतेः। अभावप्रतियोगियज्ज्ञानं तत्किं साक्षिचैतन्यं स्यात् 'साक्षी चेता इत्यादिश्रुतेस्तस्यापि ज्ञानत्वप्रसिद्धेः किंवान्तः करणवृत्तिः विज्ञानेन वा ऋग्वेदं विजानाति इति विज्ञानशब्देन बुद्धे श्रवणात्।

अनुभवस्यास्य ज्ञानाभावविषयत्वं प्रतिक्षिप्तम् निर्विकल्पक-घटितप्रतियोगिकस्य ज्ञानसामान्याभावस्य स्वात्मनि प्रत्यक्षायोग्यत्वाच्च न च। अज्ञानं कि ब्रह्मनिष्ठमुत जीवनिष्ठम्। नाद्यो नित्यशुद्धत्वादिस्व भाव-विरोधात् न द्वितीयोऽन्योन्याश्रयात् तथाहि अज्ञानमित्युक्ते कस्य किंविषय-मित्या श्रयविषयसापेक्षाताप्रतीतेनं निराश्रयमज्ञानमस्तीतिप्रतिपत्तुं शक्यम्। तस्य च जीवाश्रयत्वे जीवभावत्वसिद्धिरिति कथं नान्योन्याश्रयः। अजामेकामिति आदिपदात् "मायातु प्रकृतिं विद्यात् तरत्यविद्यां विततां अक्षरात्परतः परः तद्धेदं तर्ह्यव्याकृतं" तम् आसीतमसा गूढं इत्याद्येकवचनान्तश्रुत्यन्तरग्रहः। सर्वज्ञः सामान्यतः सर्वविद्विशेषतः इति भेदः। आदिशब्दात् "सदेव सोम्येदं" एष सेतुर्विधरणः एषत आत्मान्तयाम्यमृतः "महतः परमव्यक्तं" यतो वा इमानि यः परः स महेश्वरः इत्यादिश्रुत्यन्तरग्रहः। इन्द्रः परमेश्वरः प्रकरणात् स मायाभिर्मायाविक्षेप शक्तिभिर्विक्षिप्तेषु देहेन्द्रियान्तः करणेषु प्रतिबिम्बितः पुरुरूपो बहुरूपः सन्नीयते प्रकाशत् इति श्रुत्यर्थः ज्ञानप्रतिबन्धकारणवान् जीवो निकृष्टस्तस्योपाधितयेत्यर्थः मलिनं रजस्तमोभ्यामभिभूतं सत्वं प्रधानं यस्या सा तथा रजस्तमसोः स्वांतत्रयेण प्रतिबिम्वोद्धाहकत्वायोगादिति भावः एतदुपहितं व्यष्ट्यज्ञानोपहितम्।

यद्यप्यज्ञानस्य मूर्तत्वामूर्तत्वाभ्यामनिर्वाच्यत्वान्न परिच्छिन्नत्वं तथापि परिच्छेद्यापेक्षयाल्पत्वमात्रं विवक्षित्वमिति दृष्टान्तदार्ष्टान्तिकयोरवैषम्यम् बुद्धिपिधायकतयेत्यत्र बुद्धिशब्देन तदनुरक्तं चैतन्यं लक्ष्यते।

लूतोर्णनाभिः तन्तुरेव कार्य तन्तुकार्यम्। यथा लूता तन्तुनिर्माणे प्रसिद्धकर्पासतूलकाष्ठयन्त्रादिसहायमनपेक्ष्यैव तन्तूनातानवितानात्मकं च तत्कार्य जालरूपं सृजत्येवमीश्वरः प्राक्सृष्टेरेक एवाद्वितीयोऽसहाय एव स्वमायाशक्त्या वेशमात्रेण लिङ्गादि ब्रह्माण्डान्तं जगत्ससृजेदिति भावः।

**यथोणनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधय सम्भवन्ति।**
**यथा सतः पुरुषात्मकेशलोमानि तथाक्षरात्सम्भवतीहविश्वम्।।**[१]

श्रोत्रादीनि तेषां शब्दस्पर्शरूपरसगन्धग्राहकेन्द्रियत्वानि प्रत्येकं यथाक्रमं लक्षणानि। इन्द्रियाण्याहंकारिकाणीति संख्यास्तान्निराकुर्वस्तेषां भौतिकत्वं कथयति। निश्चयोऽध्यवसायः इदमित्थमेवेति विषयपरिच्छेदः। संकल्प इदं नीलमिदं पीतमिति विषयविवेचनम् विकल्पस्तद्विपर्यय इति भेदः नन्वन्तः करणस्य चतुष्टयत्वप्रसिद्धेः कथमिह द्वयमेव गृहीतमित्यत आह। "प्राणौ हृदये" इति श्रुतेः "हृदिप्राण" इत्यभिधानाच्च हृदयस्थानः प्राणस्तथापि नासाग्रे प्रत्यक्षमुपलभ्यमानत्वान्नासाग्र स्थानवर्तीत्युक्तम्। अधोनाभेरधस्ताद्-गमनवान्मलापनयनव्यापारेण। पायुगुदं तत्स्थानवतीत्यर्थः आदि शब्दादुपस्थ-ग्रहः तत्रापि मूत्ररेतोविसर्गस्या पानकर्मत्वात्। विष्वक्परितः सर्वतो गमनं विद्यते यस्य स तथा। पाणापाननियमनकर्मारण्यामग्न्युत्पादनादिवीर्यवत्कर्म-

---

१. वे०विद्व०टीका, पृ० ४२.

हेतुत्वादखिलशरीरवर्ती व्यानइत्यर्थः ।

सेयं देवतैक्षतहन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानु-प्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणि इतीक्षित्वा सा सदाख्या परमात्मदेवता सृष्टानां तिसृणां देवतानां तेजोबन्नात्मिकानां मध्य एकैकां देवतां त्रिवृत त्रिवृतं त्रिरूपां त्रिरूपामकरोत्कृतवतीति त्रिवृत्करणश्रुतिः। सा पञ्चीकरणमप्युपलक्षयत्याक्षिपतीत्यर्थः त्रिवृत्करणं नाम तेजोबन्नां त्रयाणां मध्य एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्व द्वितीयं स्थूलभागं परित्यज्यान्यदीपस्थूलभागयोरेकैस्य भागस्य संयोजनम्। वैशेष्याद्विशेषभावात् भागाधिक्यात्तद्वादो नभः पवनस्तेजो जलं पृथिवीत्या-दिव्यपदेशो भवतीति द्वितीयाध्यायसमाप्तधिकरणे न्यायेन निर्णयः कृतस्तेन न्यायेनाकाशादौ व्यवहारासाङ्कर्य सिध्यतीत्यभिप्रायः इदानीभूतानां पञ्चीकृतत्वे लिङ्गं चाह तदानीमिति तदानीपञ्चीकरणानन्तरमाकाशे शब्दोऽभिव्यज्यते स्फुटतयेति सर्वत्र योजनीयम्।

सूक्ष्मशरीरं कारणशरीरं तदपरित्यज्य स्थूलशरीरादौ तदपेक्षया-स्थूलशरीरं लिङ्गशरीरं तदादिर्यस्य परमस्थूलशरीरस्येति तद्गुणसंविज्ञानो बहुव्रीहिस्तस्मिन्प्रवेष्टत्वात्। तथा हि जीवस्य त्रय उपाधयः सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरञ्जितम ज्ञानमात्रमुपाधिः। स्वप्ने जाग्रद्वासनामय लिङ्ग-शरीरमुपाधिः ।

अध्यारोपापवादनिरूपणे फलितमाह आभ्यामिति। ब्रह्मात्मचैतन्य-स्याद्वितीयप्रत्यग्रूपतानिरूपणार्थत्वादध्यारोपादिप्रपञ्चनस्य पदार्थशुद्धिरवान्तर-फलमिति सुचयितुं पदार्थ शोधनमपीत्युक्तम् तत्वम्पदयोः प्रत्येकं द्विवीधोऽर्थो

वाच्यो लक्ष्यश्चेति तदुभयं विभज्य दर्शयति तथाहीत्यादीना समष्टयज्ञानं तदुपहित इश्वरस्तदुभयाश्रयमनुपहितं स्वमहिम्नि प्रतिष्ठितमक्षरशब्दवाच्यं चिन्मात्रमित्येतन्नयं तप्तायः पिण्डवदविविक्तं तत्पदवाच्यार्थ इत्यर्थः। आदिपदात्मसमष्ठिहिरण्यगर्भविराजौ गृह्यते। तत्राज्ञानादिव्यष्टिरित्यत्रादिपदात्सूक्ष्मशरीरं स्थूलशरीरं च गृह्यते। एतदनुपहितं प्रत्यक्चितिमात्रम्। शेषं चेत्येवमस्थात्रययुक्तमिति योजयितव्यम्। अज्ञानतत्कार्यसमस्तप्रपञ्चेषु सत्तास्फूर्तिप्रदत्वेनानुस्यूतं चित्सदानन्दाद्वयात्म कं वस्तु तत्पदलक्ष्यार्थः। देहेन्द्रियमनोबुद्धिप्राणहंकृतितद्धर्मजा ग्रत्स्वप्नसुषुप्त्यवस्थाभ्यो विलक्षणस्तत्साक्षी चिद्धातुस्त्वम्पदलक्ष्यार्थ इत्याहएतदुपाध्युपहितेति।

तत्कालोऽतीतकालः। एतत्कालो वर्तमानकालः परोक्षत्वादीत्यादिशब्दान्नियन्तृत्वादिग्रहः। अपरोक्षत्वादीत्यादिपदानिनयम्यत्वादिग्रहः।

सोऽयम्पदार्थयोर्मध्ये कस्य वा विशेषणता कस्य वा विशेष्यता किं तद्विशेषण कृत्यमित्यपेक्षायां द्वयोरपि पदार्थयोः परस्परापेक्षया विशेषण विशेष्यभावो भेदभ्रमापोहश्च विशेषणकृत्यमित्यभिप्रेत्याह।

अभिधेयाविना भूतप्रवृत्तिलंक्षणा सा त्रिविधा जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति। वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणापदवाच्यार्थयोः परस्परविरुद्धत्वान्नायोन्यं विशेषणविशेष्यभाव उपपद्यते। तथा च तत्समर्पकयोरपि पदयोः सामानाधिकरण्यवशात्प्रतीयमानस्यैक वाक्यार्थस्यानुपपत्तिरिति लक्षणायां प्रसक्तायां वक्ष्यमाणप्रकारेण जहदजहल्लक्षणयोः प्रकृतासंगतौ पदवाच्य गतविरुद्धांश प्रहाणेनाविरुद्धांशलक्षणया सामानाधिकरण्ये सति वाक्यादखण्डार्थप्रति पत्तिरितिभावः।

सविकल्पकः सम्प्रज्ञातसमाधिनिर्विकल्पकोऽसम्प्रज्ञातसमाधिरिति साम्प्रदायिकी संज्ञा द्रष्टव्या। तत्रेत्युद्दिष्टसमाधिद्वय सप्तम्यर्थः ज्ञाता ज्ञानं चेति यो विकल्पो विभागोल्लेखस्तस्य लयोऽभावस्तदनपेक्षया त्राहादिविकल्पोल्लेख-पूर्वकमिति यावत्।

सुषुप्तौ बुद्धिरेव नास्ति बुद्धेः कारणात्मनावस्थानस्य तल्लक्षत्वात्। इह तु बुद्धिवृत्तेरद्वितीय वस्त्वाकाराकारिताया अवस्थानाङ्गीकारात्सुषुप्तेर्भेदो-पपत्तेरित्यर्थः। नापि मुक्तावतिव्याप्तिस्तत्ताविघातत्कार्य संस्काराणामत्यन्त-मुच्छेदात् इहपुनर्व्युत्थानादि व्यवहार दर्शनेन तेषामनुवृत्तेरिष्टत्वात् नापि जीवन्मुक्तौ प्रसङ्गतस्य व्युत्थानदशायामपि बाधितानुवृत्तिमात्रप्रपञ्चावभासेऽपि स्वस्वरूप एवावस्थानात्साधकस्य बाधितानुवृत्तिमात्रप्रपञ्चावभासाभावादिति द्रव्यम्।

**यो हि यत्रविरक्तः स्यान्नसौ तस्मिन्प्रवर्तते।**
**लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते॥**
**क्षुधयापीडयमानोऽपि न विषं ह्यत्तुमिच्छति।**
**मिष्टान्नध्वस्ततृङ् जानन्नामूढस्तज्जिघत्सति॥**
**रागोलिङ्गमबोधस्य चित्तव्यापामभूमिषु।**
**कुतः शाऽवलता तस्य यस्याग्निः कोटरे तरोः॥[१]**



१. वे०विद्व०टी०, पृ० १११.

# पञ्चमोऽध्यायः

## अनुबन्धचतुष्टयविवेचनम्

यच्छास्त्रैकदेशसम्बद्धं यत्प्रकरणं तत्तच्छास्त्रीयैरेवानुबन्धैरनुबन्धवद्युक्तम्। अन्यथा शास्त्रप्रकरणयोर्भिन्नविषयादिमत्त्वेन शास्त्रासम्बद्धत्वप्रसङ्गादसम्बद्धप्रलपितमिदमापद्येत। अतोऽस्य ग्रन्थस्य वेदान्तशास्त्रीयप्रकरणत्वाद्वेदान्तशास्त्रसिद्धैरेवानुबन्धैस्तद्वत्तासिद्धेर्न तेऽनुबन्धाः पृथगोलोचनीया इत्यर्थः।

ननु महाविषयादेरिह शास्त्रीयत्वेऽप्यवान्तरविषयादेः पृथगालोचनमुचितमितरथा शास्त्रं परित्यज्य प्रेक्षावतोऽत्र प्रवृत्त्योगादितिचेद्वाढं प्रकरणत्वेनैवावान्तरसङ्गतेः सुलभालोचनत्वात्पृथगिह निर्देशानपेक्षणात्। तथाहि सारग्रहणेच्छुरवान्तराधिकारी। सगुणनिर्गुणरूपविषयभेदं परित्यज्य निर्गुणसारमात्रमिह विषयः। तन्मात्रावधारण मवान्तरप्रयोजनम्। सम्बन्धोऽपि विषयानुरूप इति भावः। ननु शास्त्रीयोऽनुबन्धः शास्त्रविद्भिरेव विज्ञायते न व्युत्पित्सुभिस्तत्कथमिह तेषां शास्त्रीयविषयाद्यनभिज्ञानां प्रवृत्तिरित्याशङ्क्य शास्त्रीयमेवानुबन्धं संक्षेपतो व्युत्पादयितुमुपक्रमते – तत्रानुबन्धो नाम इत्यादिना। तत्र वेदान्तशास्त्रे। स्वार्थप्रतिपत्तारमनोश्रित्य शास्त्रस्य प्रवृत्त्ययोगादादावधिकार्यनुबन्धापेक्षा। तस्य च विषयबोधमन्तरेणाप्रवृत्तेर्विषयस्य

तदानन्तर्यम्। विषयस्य च शक्यप्रतिपाद्यत्वसिद्धये सम्बन्धस्य विषयानन्तर्यम्। प्रयोजनस्य चरमत्वं प्रसिद्धमित्यु – द्देशपाठक्रमो विवक्षितः। तथा च शारीरकसूत्रं "अथातो ब्रह्मजिज्ञासा" इति।

तत्र यथोद्देशक्रममधिकारिणं निरूपयति – अधिकारी त्वति। धर्मजिज्ञासाधिकारिणोऽस्य वैलक्षण्यसूचनार्थस्तुशब्दः। प्रमाताधिकारीत्यन्वयः। लौकिकवैदिकव्यवहारेष्वभ्रान्तो जीवः प्रमातेह विवक्षितः। जीवमात्रस्य पक्षे भ्रमसम्भवेन शास्त्रार्थप्रतिपत्तृत्वायोगात्। तस्य तुशब्दसूचितं विशेषमाह – साधनचतुष्टयसम्पन्न इति। वक्ष्यमाणसाधनचतुष्टयविशिष्ट इत्यर्थः। अयं भावः। न तावद्वेदाध्ययनं ब्रह्मजिज्ञासाधिकारहेतुस्तस्य धर्मब्रह्मजिज्ञासयोः साधारणत्वात्तन्यालेषेह नियमेन प्रवृत्त्यनुपपत्तेः। नापि धर्मविचारः। प्रागपिधर्मविचाराद्धीत वेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। नापि धर्मानुष्ठानमिह जिज्ञासाहेतुर्विनापि धर्मानुष्ठानं ब्रह्मचर्यादेव विरक्तस्य ब्रह्मजिज्ञासादर्शनात्। श्रुतिश्च भवति विविदिषोः संन्यासविधायिनी "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिका।

"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वास्ति" इति श्रुतेः।

**"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।**
**अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः।।"[१]**

१. वे०विद्व०टी०, पृ० १२.

इति स्मृतेश्चर्णत्रयापाकरणमन्तरेण मोक्षशास्त्रविचारप्रवृत्त्ययुक्तताया गम्यमानत्वात्कथं धर्ममनुष्ठाय सन्नयासपूर्वकब्रह्मविचारे प्रवृत्तिरिति चेत्। उच्यते। श्रुतिस्तावत् ''हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस'' इति पश्ववदानत्रयविधिमुपक्रम्य ''तदवदानैरेवावदयते तदवदानानामवंदानत्वं'' इत्यवदाननिर्वचनेनोपसंहारादवदानत्रयविध्यर्थवादत्वान्न स्वार्थपरा। अतः सा 'ब्रह्मचर्यादेव' इति श्रुत्यानन्यपरया बाध्यते। यदि ब्रह्मचर्यादिभिरपाकरणीय-मृणत्रयमपि ''अवदानैरेवावदयत'' इत्यवदानश्रुतौ ब्रह्मचर्यादेर्ऋणत्रयापा-करणहेतुत्ववचनं स्वार्थपरमेवेति मतं तथापि जातमात्रस्यर्णत्रयसम्बन्धे प्रमाणाभावादधिकारी जायमानो गृहस्थो वा जायमान इति वा व्याख्यानमुचितम्। स्मृतिस्त्वविरक्तविषयतया व्याख्येया। एतेन ''यज्ञायुधी यजमानः'', ''जरया वास्मान्युच्येरन्'', ''वीरहा वा एष देवानां योऽग्निमुद्वासयत'' इत्यादिश्रुतयः ''ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य'' इत्यादि-स्मृतयश्च व्याख्याता वेदितव्याः। नितान्तमत्यन्तं निर्मलं शुद्धं स्वान्तमन्तः करणं यस्य स तथा। कुतः स्वान्तस्य नैर्मल्यं प्रतिबन्धकरागादिवासना-निवृत्त्येत्याह – निर्गत इति। रागादिवासनारूपकल्मषनिवृत्तिरपि कृतस्तत्राह – नित्य इति। काम्यकर्माभिरतस्यानुष्ठीयमानमपि नित्यादि न साक्षात्कल्मष-निवृत्तिहेतुः कामवासनया शुद्धप्रतिबन्धसम्भवात्तथा निषिद्धावर्जने पापेन प्रतिर्बन्धादित्यभिप्रेत्य नित्यानुष्ठान विशिनष्टि – काम्यनिषिद्धवर्जनपुरःसरमिति। एवं नित्याद्यनुष्ठानस्य शुद्धेश्चैकभविकत्वनियमं व्यावर्तयति अस्मिन् जन्मनि जन्मान्तरे वेति।

**"अनेकजन्मसंसिद्धस्ततो याति परां गतिम ।**

**न हि कल्याणकृत्कश्चिद्दुर्गतिं तान गच्छति ।।"[१]**

इत्यादिस्मृतेर्जन्मान्तरानुष्ठितस्यापि जन्मान्तरोपकारकत्वसम्भवादिति भावः। एवं काम्यनिषिद्धवर्जनपुरः सरमिहजन्मनि जन्मान्तरे वानुष्ठितनित्यादिक्षपितकल्मषस्य विवेकादिसाधनचतुष्टयसम्पत्तौ कारणमाह – आपातत इति। आपाततो विचारेणेदमित्थमेवेति पर्यवधारणमन्तरेणाधिगतोऽखिलो वेदार्थो येन स तथा। वेदशब्दो वेदान्तविषयः।

वस्तुतश्चित्सदानन्दब्रह्मस्वभावोऽप्यात्माऽनाद्यनिर्वाच्याविद्यासम्बन्धलब्धजीवभावोऽविद्याकामकर्मवंशगतः काम्यनिषिद्धाद्यनवरतमाचरंस्तत्फलभूतस्वर्गनरकौ भुञ्जानस्तद्भोगवासनावासितस्तदनुरूपं पुनः कर्म पुनः फलमित्येवं घटीयन्त्रवत्कुलालचक्रवद्वीर्ध्वाधस्तिर्यग्भ्रमणमविश्रममनुभवन् हृष्टः कृतार्थो मूढो दुःखी वेत्यात्मानं मृषैव मन्यते। स पुनः।

**"एकः काम्योऽपरो नित्यस्तथा नैमित्तिकः परः ।**

**प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्मणः ।**

**प्राधान्येन मनः शुद्धिर्नित्यस्य फलमार्थिकम् ।**

**केवलं प्रत्यवायस्य निवृत्तिरितरस्य तु ।।"[२]**

इत्यादिपुराणवचनादतीतानेकजन्मसुकृतयादृच्छिकपुण्यपुञ्जपरिपाकोदयवशात्काम्यफलेषु जातदोषबुद्धिराध्यात्मिकादिदुःखत्रयं च

१. वे०विद्व०टी०, पृ० १३.
२. तदेव, पृ० १३.

निषिद्धाचरणफलमाकलयन् काम्यनिषिद्धे परित्यजन्नीश्वरार्पणबुद्ध्यानुष्ठितनित्यादिक्षपितकल्मषतया नितान्तनिर्मलस्वान्तोऽधीतसाङ्गवेदार्थापातालोचनया लब्धविवेकादिसाधनसम्पन्नः स्वात्मयाथात्म्यजिज्ञासुर्वेदान्ताधिकारीति ।।

सन्ध्यावन्दनादीनि इत्यादिपदात्पञ्चमहायज्ञादिग्रहः । निमित्तमात्रमासाद्यावश्यकर्तव्यतया विहितानि नैमित्तिकानि । एतदाह- पुत्रेति । जातेष्टिर्नाम ''वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते'' इति विहिता । आदिपदात् ''यस्याहिताग्नेर्गृहान्दहत्यग्निरग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्'' इत्यादिनोक्तानां ग्रहः । उपरागस्नानादि च स्मार्तमुदाहरणीयम् । यद्यपि जातेष्टिवाक्यशेषे ''यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति'' इति पुत्रगाम्यवान्तरफलश्रवणान्न वक्ष्यमाणकर्तृगामिद्विविधफलानुकूलंऽज तेष्ट्युदाहरणं तथापि नैमित्तिकस्वरूपमात्रव्युत्पादनायोदाहरणं न दुष्यतीति द्रष्टव्यम् । विहिताकरणप्रतिषिद्धसेवारूपनिमित्तविशेषानुबन्धीनि प्रायश्चित्तानि पापक्षयमात्रोद्देशेन विहितानीति वा । आदिपदात्कृँच्छ्रादिग्रहः । शास्त्रबोधिते सगुणे ब्रह्मणि दीर्घकालादरनैरन्तर्योपेतमनोवृत्तिस्थिरीकरणलक्षणानि उपासनानि । निदिध्यासनाद्भेदमाहसगुणेति । उपासनानां ज्ञानाद्भेदं दर्शयति – मानसव्यापाररूपाणीति । शाण्डिल्यविद्या नाम ''सर्वं खल्विदं ब्रह्म'' इत्युपक्रम्य ''स क्रतु कुर्वीत मनोमयः प्राणशरीरो भारूप'' इत्यादिना छान्दोग्योविहिता । वाजिनामग्निरहस्याख्येऽपि काण्डे ''स आत्मानमुपासीत मनोमयं प्राणशरीरं'' इत्यादावुक्ता । वृहदारण्यके च ''मनोमयोऽयं पुरुषो भाःसत्य'' इत्यादौ प्रत्यभिज्ञाता विद्या । आदिशब्दादहरवैश्वानरादिविद्यान्तरग्रहः ।

"नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिर्धर्मोत्पत्तेः पापहानिस्ततश्चित्तशुद्धिस्ततः संसारयाथात्म्यावबोधस्ततो वैराग्यं ततो मुमुक्षत्वं ततस्तदुपायपर्येषणं ततः सर्वकर्मसन्नयासस्ततो योगाभ्यासस्ततश्चित्तस्य प्रत्यक्प्रवणता ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानं ततोऽविद्योच्छेदस्ततः स्वात्मन्यवस्थानं" इति। उपासनानां त्विति। तुशब्दः कर्मभ्य उपासनाया वैशिष्ट्यद्योतनार्थः। तस्य नित्याद्यनुष्ठानक्षपितकल्मषतया विशुद्धस्य चित्तस्य शास्त्रप्रकाशिते ध्येये ज्ञेये वा विषय एकाग्रयं निश्चलत्वमित्यर्थः।

कर्मणां ज्ञानं प्रत्यारादुपकारकत्वं तु स्यात् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति न्यायात्। उक्तं च भाष्यकृद्भिः – "विविदिषासंयोगात्तु ब्राह्येतराणि यज्ञादीनि" इति। तत्रैव स्मृतिं संवादयति – तपसेति। आदिपदात् "कषायपक्तिः कर्माणि" इत्यादिस्मृत्यन्तरग्रहः।

ननु नित्यादेः सत्त्वशुद्धितदैकाग्र्यफलकत्वे "कर्मणा पितृलोको विद्यया देवलोकः" "सर्व एते पुण्यलोका भवन्ति" इति श्रुतिर्नित्यादीनां पितृलोकादिफलपरा पीड्येतेत्यत आह – नित्यनैमित्तिकयोरितिः अत्र प्रायश्चित्ताग्रहणं तस्यावान्तरफलाभावात्। न ह्युपात्तदुरितक्षयमन्तरेण तस्य किञ्चित्फलं श्रुतमस्ति। अन्ययोस्तु तच्छ्रूयत इति विशेषः। नित्यनैमित्तिकयोः पितृलोकप्राप्तिरवान्तरफलमुपासनानां सत्यलोकप्राप्तिरिति विवेकः। "तद्यथा आम्रे फलार्थे निमिते छायागन्धावित्यनूत्पद्येते" इति स्मृत्युक्तछायागन्धवत्पितृलोकादिफलस्यावान्तरत्वमानुषङ्गिकत्वम्। तदुद्देशेन नित्यादेरविधानाद्विविदिषासंयोगस्य च विधानाच्छुद्धेरेव महाफलत्वमिति भावः। ननु पितृलोकस्य कथं नित्यादिसाध्यत्वं श्राद्धादिकर्मसाध्यत्वात्। देवलोकस्य च —

**''अष्टाशीतिसहस्त्राणां मुनीनामूर्ध्वरेतसाम् ।**
**उत्तरेणार्यम्णः पन्थाः ................... ।।''[१]**

इत्यादिस्मृतेनैष्ठिकाद्यूर्ध्वरेतआश्रमधर्ममात्रसाध्यत्वावगमात्कुतो विद्याफलत्वमिति चेदत्र पृच्छामः। किं श्राद्धादि नित्यनैमित्तिकरूपं कर्म काम्यं वेति। आद्ये कथं न नित्यादेः पितृलोकः फलम्। द्वितीये त्वस्य विध्युद्देश-फलेनैव निराकाङ्क्षत्वात्पितृलोकफलसम्बन्धाभावान्नापि विना विद्यामूर्ध्वरेत-आश्रमधर्ममात्रेणोत्तरमार्गगमनं सम्भवति।

**''विद्यया तदरोहन्ति यत्र कामाः परागताः ।**
**न तत्र दक्षिणायन्ति नाविद्वांसस्तपस्विनः ।।''[२]**

इति श्रुतौ विद्याविरहिणामुत्तरमार्गनिषेधात्। निर्णीतं चैतदाचार्यै-र्गुणोपसंहारपादे ''अनियमः सर्वासामविरोधः शब्दानुमानाभ्यां'' इत्यत्राधिकरणे स्मृतिर्नापुनरावृत्तिमूर्ध्वरेतसामाचष्टे किन्तु गमनमात्रम्। श्रुतौ तु देवलोक-शब्दितब्रह्मलोकगतानां पुनरावृत्त्यभावोऽवगम्यते। ''एतेन प्रतिपद्यमाना इमं मानवमावर्त नावर्तन्ते नावर्तन्त'' इति, ''तेषामिह न पुनरावृत्तिः'' इति च। यत्पुनरत्रेममिहेति च विशेषणात्कल्पान्तर आवृत्तिरवगम्यते तद्विद्यारहितानामना-वृत्तिस्तु विद्यावतां क्रममुक्त्याम्नानादिति रहस्यम्। नन्वेवं सति छान्दोग्य-भाष्यविरोधस्तत्र हि महता सरम्भेण ''ये चेमेऽरण्ये श्रद्धातप इत्युपासत'' इति पञ्चाग्निविद्यागतवाक्यव्याख्यानावसरे गृहस्थानां विद्यारहितानामनृतपैशुन्य-

---

१. वे०विद्व०टी०, पृ० १७.
२. तदेव, पृ० १७.

मायादम्भाब्रह्मचर्यादिभिरपूतत्वान्न स्वधर्मनिष्ठामात्रेणोत्तरमार्गगतिरस्ति। इतरेषां नैष्ठिकवानप्रस्थमुख्यसन्नयासिनां तु तद्विपरीतत्वात्पूततया स्वाश्रमधर्मनिष्ठा-मात्रेणोत्तरमार्गगतिपुनरावृत्तिलक्षणा भवेदित्याचार्यैरेव निरूपितम्। ''न तत्र दक्षिणा'' इत्यादिश्रुतिः परममुक्त्यपेक्षेति च व्याख्यातम्। तत्कुत एवं विभागवचनमिति चेत्सत्यम्। ऊर्ध्वरेतसामुत्तरमार्गेण ब्रह्मलोकगमनं विद्यां विनापीत्येतावन्मात्रं तत्रोक्तं न पुनरात्यन्तिक्यपुनरावृत्तिस्तत्र विवक्षिता।

**''आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते।''**

इत्यापेक्षिकामृतत्ववचनोदाहरणात्। गुणोपसंहारे च ''तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणं वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते 'ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धासत्यमुपासत'' इत्युदाहृत्य तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयं सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात्'' इति तैरेव व्याख्यातत्वात्। याज्ञवल्क्यश्चाह —

**''सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः।**
**तावन्त एव मुनयः सर्वारम्भविवर्जिताः।।**
**तपसा ब्रह्मचर्येण सङ्गत्यागेन मेधया।**
**यत्र गत्वावतिष्ठन्ते यावदाभूतसम्प्लवम्।।''**[१]

तस्मादात्यन्तिक्यपुनरावृत्तिर्विद्यावतामेवेति युक्तं क्रमसुक्तिहेतुत्वा-द्विद्यायाः। न च तर्हि मुक्तेरेव विद्यायाः परमप्रयोजनत्वाच्चित्तैकाग्रयस्य तदयुक्त-

१. वे०विद्व०टी०, पृ० १८.

मिति वाच्यं सगुणब्रह्मविदस्तथात्वेऽपि निर्गुणब्रह्मविद्याधिकारिणः चित्तैकाग्रताया एव परमप्रयोजनत्वात्। तस्यापि साक्षात्कारोदयात्प्रागेव प्रतीतस्य ब्रह्मलोक-गमनोपपत्तेः।

"प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वती समाः।"[१]

इत्यादिस्मृतेश्च। सगुणब्रह्मविदोऽपि ब्रह्मलोकगतस्य तत्रत्यं भोगं विद्यावान्तरफलं भुक्तवतस्तत्रोत्पन्नचित्तैकाग्र्यद्वारा स्वयम्भातवेदान्तवाक्यार्थ-ज्ञानादेव मुक्तिरिति नियमात्। भवत्येव चित्तैकाग्रतोपासनायाः परमप्रयोजनमिति न किञ्चिद्दुष्यति। तस्मात् "सर्व एते पुण्यलोका भवन्ति" इति श्रुतेर्नित्य-नैमित्तिकयोः फलवत्त्वस्य वाचनिकत्वात्तथात्वेऽप्युक्तलक्षणभेदेन काम्यवैषम्या-त्फलविशेषस्य चाश्रुतत्वात्पितृलोकस्य च फलात्मनः कर्मविशेषाकाङ्क्षि-तत्वान्नष्टाश्वदग्धरथन्यायेन "कर्मणा पितृलोक" इति श्रुतिरुपपद्यते। काम्य-प्रायश्चित्तयोः फलविशेषोद्देशने पापक्षयमात्रार्थत्वेन च विधानात्फलांतराङ्क्षा भावात्तथाङ्गावबद्धानामामुपासनानां कर्मसमृद्धयर्थत्वादनङ्गावबद्धानामपि प्रतीकोपासनानामब्रह्मोपासनानां चाभ्युदयफलत्वात्कार्यकारणब्रह्मोपासना-नामवान्तरफलं देवलोकशब्दवाच्यब्रह्मलोक इति परिशेषात्सिद्धेर्युक्तं 'विद्यया देवलोक' इति वचनमित्यलं प्रपञ्चेन।

साधनसम्पन्नः प्रामाताधिकारीत्युक्तं तत्र कानि साधनानि क्रियन्ति वेत्यपेक्षायां तानि विभजते – साधनानीति। विवेकमन्तरेण वैराग्यायोगा-द्विवेकस्य प्राथम्यं न हीदं हेयमिदमुपादेयमिति विवेचनमन्तरेण हेयद्रागनिवृत्तिः

---

१. वे०विद्व०टी०, पृ० १८.

सम्भवति । अनिवृत्तरागस्य शमाद्यभावाच्छमाद्यपेक्षया विरागस्य पूर्वमुद्देशः । शान्त्यादिहीनस्य मुमुक्षायोगात्ततः शमाद्युद्देशः । एतैस्त्रिभिः साधनैः सम्पन्नस्य मुमुक्षाया अवश्यम्भावात्तस्यां च सत्यांब्रह्मजिज्ञासायां नियमेन प्रवृत्तेर्मुमुक्षान्तान्येव साधनानीत्यभिप्रायः ।

विवेकादीन्युद्देशक्रमेण लक्षयति – नित्यानित्यवस्तुविवेकस्तावदित्यादिना । नित्यत्वं नाम कालानवच्छिन्नत्वमनित्यत्वं नाम तद्विपरीत्वम् । न स्थास्यतीति लोकागमयोर्व्यवहारायोग्यं नित्यं तद्विपरीतमनित्यमिति वा । तथाच नित्यानित्ये च ते वस्तुनी च नित्यानित्यवस्तुनी तयोर्विवेक इति विग्रहः । केचित्तु नित्यानित्ययोर्वसितुं शीलं ययोस्ते नित्यानित्यवस्तुनी नित्यत्वमनित्यत्वं च तयोः साश्रययोर्विवेको नित्यानित्यवस्तुविवेक इत्याहुः । स चापाततोऽधिगतवेदार्थस्यानुमानकुशलस्य ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमचेतनमनित्यमिति विवेको भवति । तथाहि । ''यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तत्ते तदेव ज्योतिषां ज्योतिः'', ''नित्यं विभुं सर्वगतं सुसूक्ष्मे'', ''आकाशवत्सर्वगतश्च नित्यः'', ''अजो नित्यः शाश्वतः'', ''सत्यं ज्ञानमनन्तं ब्रह्म'', ''ब्रह्म रातेर्दातुः परायण'', ''यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा'', ''यो वै भूमा तदमृतं'' इत्यादिश्रुतिभ्यो ब्रह्मणि नित्यत्वं विशुद्धसत्त्वस्य पुंसः प्रतिभाति । तथा ''नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्'' 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्'' ''सदेव सोम्येदमग्र आसीदेकमेवांद्वितीयं'', ''नेति नेति'', ''नेह नानास्ति किञ्चन'' ''यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं'', ''अथ यदल्पं तन्मर्त्यं'' इत्यादिश्रुतिवचनेभ्यो ब्राह्मणोऽन्यत्र भेदप्रपञ्चेऽनित्यत्वं च तस्यैव पुंसः प्रतिभाति ।

तथानुमानमपि विमतोऽचेतनवर्गोऽचेतनवर्गोऽनित्योऽविभक्तत्वाद्धटपटस्तम्भादिवत् इति । अनेह हि विभक्तस्यानित्यत्वेऽवगते तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणोऽविभक्तस्य नित्यत्वमप्यर्थादवगच्छति । आकाशादेश्चोत्पत्तिमत्त्वसाधनेनानित्यत्मुत्तरत्र वर्णयिष्यामः । न चैवं श्रुत्यनुमानाभ्यां विवेके सति ब्रह्मणो विज्ञातत्वादलं विचारेणेति वाच्यमा पाततो नित्यं वस्तु ब्रह्मेत्यवगमेऽपि तस्याद्वितीयत्वप्रत्यगभिन्नात्वादेरनिर्धारणाज्जिज्ञासाया अनिवृत्तेः ।

ऐतिकानामिति । इहलोके भवा ऐहिकाः प्रतिपन्नशरीरसम्बन्धिनः स्रक्चन्दनवनितागृहक्षेत्रपशुभृत्यादिविषयजन्यसुखरूपा भोगाः कृषिसेवाप्रतिग्रहादिकर्मजन्या अनित्या यथा दृष्टा एवमामुष्मिका अप्यमृतादिविषयसेवाजन्यानन्दा यागादिकर्मजन्यत्वादनित्या भवितुमर्हन्तीति निश्चित्य तेभ्यो नितरां छर्दितान्नवज्जुगुप्सेहामुत्रार्थफलभोगविराग इत्यर्थः । अर्थ भावः । सुखं मे निरतिशयं भूयाददुःखं मे माभूदणुमात्रमपीत्यखिलप्राणिनामस्त्यभिनिवेशः । ते चैवमभिनिविष्टाः पुरुषकारावलम्बनेन सर्वोत्साहं यतन्तोऽपि न लभन्ते सुखमात्यन्तिकं दुःखाभावं च । कयम् । केचित्समुद्रयानराजप्रीणनाद्यतिकष्टमनुभूय फलकाले स्वयं नश्यन्ति । केचित्प्राप्तफला अपि व्याध्याद्युपद्रुताः सन्तो भोगं न लभन्ते । केचित्तु प्राप्तेषद्भोगा अपि भोग्यभार्यापुत्रादिविनाशाद्वा तद्विसंवादाद्वान्यैर्वा सह स्पर्धासूयादिभिः सञ्चितभोग्यजातस्य क्षयभयेनानावृष्ट्यादिचिन्तासन्तापादिभिश्च क्षणमपि सुखमलभमानाः कष्टा दरिद्राः काणकुञ्जक्लीबबधिरादयो बुभुक्षापिपासार्दिता बहुलमुपलभ्यन्ते । एवं दुःखबहुले संसारे सुखलवमात्रमनुभवन्नपि कृपणवद्विशुद्धचित्तो न सज्जते किन्तु विरज्यत एवेति । नन्वस्त्वेवमैहिकं

सुखमनित्यत्वादिदोषदुष्टत्वाद्विरास्पद तथापि न पारलौकिकादपि विरक्तिरूपपद्यते क्षयिष्णुत्वानुमानस्य ''अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'' इति श्रुतिबाधितविषयस्यानुत्थानादिति चेन्मैवम्। ''तद्यथेह कर्मजितो लोकः क्षीयत एवमेवापुत्र पुण्यजितो लोकः क्षीयत'' इति श्रुत्या वस्तुवलावलम्बनेन प्रवृत्तयानन्यपरया सापेक्षाक्षय्यफलविषयकायाः प्राशस्त्यलक्षणाया विध्येक-वाक्यत्वेनान्यपरायास्तस्या एव बाधितत्वात्। न हि जन्यं नित्यं भावरूपं दृष्टमत ऐहिकभोगवदेवाब्रह्मस्तम्बपर्यन्तेषु भोगेषु वैराग्यमुपपद्यत इति। तदुक्तं भगवता व्यासेन —

**''यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।।''**[१]

न्यायश्च पुरुषस्योद्देश्यसिद्धये यदुपयुक्तमविरोधि च तदुपादेयं विपरीतं तु हेयमिति। तदिह ब्रह्मात्मजिज्ञासूनां वेदान्तविचारे क्रियमाणे न कर्मणामुपयोगो विनापि कर्म तदनुष्ठानसिद्धेः। नाप्यविरोधः। कर्मविक्षिप्त-चित्तस्य वेदान्तार्थनिर्णयाशक्तेः कर्मणां विचारविरोधित्वात्। न ह्यपेतब्रह्म-क्षत्राद्यकर्त्रभोक्तृब्रह्माहमस्मीत्यात्मनि विचार्यमाणे ब्राह्मणाद्यध्यासविशिष्टात्म-प्रतिपत्त्यधीनेषु कर्मस्वधिकारो न विरुध्यते येनात्मजिज्ञासुना कर्माणि न त्यक्त-व्यानि स्युः। तस्माच्छ्रुतिस्मृतिन्यायैरात्मज्ञनाङ्गतया यः सन्नयास कर्तव्यतया प्राप्तः सोपरतिरिति भावः। शीतोष्णादीत्यादिपदान्मानापमानलाभालाभशोक-हर्षादिग्रहः। श्रवणादावित्यत्रादिशब्दो मननादिसङ्ग्रहार्थः। तदनुगुणेत्यत्र

१. वे०विद्व०टी०, पृ० १९.

गुरुशुश्रूषापुस्तकसम्पादनतद्रक्षणादिः श्रवणाद्यनुगुणो विषया निर्दिश्यते। न पुनः सुखवासद्रव्यान्नादिसङ्ग्रहादेरपि श्रवणाद्यनुकूलत्वात्तदर्थं मठारम्भप्रतिग्रहादावपि चित्तसमाधिः कर्तव्य इहोपदिश्यते ''दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेत्'' इति सन्नयासकाले त्याजितस्य दण्डकौपीनाद्यतिरिक्तिस्य विना प्रतिप्रसवशास्त्रं सङ्ग्राहानुपपत्तेरित्यर्थ। समाधिरैकाग्रयं तत्परत्वमिति यावत्। गुरुवेदान्तादीत्यादिपदात्स्मृतीतिहासपुराणानां ग्रहः विश्वास इदमित्थमेव नान्यथेति गुर्वादिवाक्येषु नियता बुद्धिः सा श्रद्धेत्यर्थः ।।

चरमं साधनं लक्षयति – मुमुक्षुत्वमिति। मोक्षो नाम विद्यानिरस्ताविद्यातत्कार्यब्रह्मात्मनावस्थानम्। तद्विषयेच्छा मोक्षेच्छा तद्वत्त्वं मुमुक्षुत्वमित्यर्थः। ननु —

**''यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवति ..................... ।।''[१]**

इति श्रुतेः सर्वकामविमुक्तस्य मोक्षाधिकारात्कथमिच्छाधिकारिविशेषणमिति चेन्नायं दोषोऽनात्मविषयेच्छाया एव कामत्वात्तदभिप्राया श्रुतिः। मोक्षेच्छायास्तु आत्मविषयतयाकामत्वात् ''अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकाम'' इति श्रुतेरात्मकामस्याप्तकामत्वेनाकामत्वावगमादिति। विद्याधिकारिणः शमादिसाधनवत्त्वे श्रुतिं प्रमाणयति – शान्तो दान्त इति। ''शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति'' इति

---

१. वे०विद्व०टी०, पृ० २१.

काण्वाः पठन्ति। समाहित इत्यस्य स्थाने "श्रद्धावित्तो भूत्वे"ति माध्यन्दिनाः। तदुभयपाठानुरोधेन गुणोपसंहारन्यायमाश्रित्येह शमादयः षण्निर्दिष्टा इति द्रष्टव्यम्। शमादेर्विद्याहेतुत्वं श्रीभगवानप्याह —

**योगारूढस्य तस्यैव शमः कारणमुच्यते।**
**................अशान्तस्य कुतः सुखं॥**
**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥"[१]**
**"अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति॥"** इति च।

मुमुक्षुत्वेऽपि —

**"मुमुक्षुर्वै शरणमहं प्रपद्ये॥"**
**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥[२]**

इति श्रुतिस्मृती द्रष्टव्ये। एवं विशेषणविशिष्टो वेदान्ताधिकारीति निरूपितेऽर्थेऽभियुक्तवचनमुदाहरति उक्तं च प्रशान्त इति। प्रशान्तचित्ताय शान्ताय। जितेन्द्रियाय दान्ताय। प्रहीणदोषाय नितान्तनिर्मलस्वान्ताय। यथोक्तकारिणे काम्यनिषिद्धवर्जनपुरःसरं नित्याद्यनुष्ठानलब्धेश्वरप्रीतये। गुणान्विताय विवेक-वैराग्योपरतितितिक्षासमाधानयुक्ताय। सर्वदा गुरुमनुगताय श्रद्धालवे। एवं भूताय मुमुक्षव एतदात्मज्ञानं सततं गुरुणा देवमिति श्लोकार्थ॥

---

१. वे०विद्व०टी०, पृ० २१.
२. तदेव, पृ० २२.

तदेवमधिकार्यनुबन्धो निरूपितः। इदानी विषयानुबन्धं व्यपदिशति विषय इति। क्षीरनीरवत्परस्परविभिन्नयोः समानाभिहारस्यैक्यशब्दार्थत्वाज्जीव-ब्रह्मणोरपि स्वरूपतो भिन्नयोरैक्यं मिश्रीभाव इति शङ्का स्यात्सा माभूदिति व्याचष्टे – शुद्धचैतन्यमिति। चैतन्यस्य शुद्धत्वं सर्वधर्मातीत्वमेकरसत्वम्। ननु कथं शुद्धचैतन्यस्य विचारविषयत्वं यावता प्रागपि विचारात्तत्स्वप्रकाशं स्वयमेवावभासत इत्याशङ्क्य स्वरूपेणावभासमानत्वेऽपि परिपूर्णसच्चिदानन्द-प्रत्यवस्वरूपतयाज्ञायमानत्वाद्विषयत्वोपपत्तिरित्यभिप्रेत्याह – प्रमेयमिति। प्रमेयत्वमज्ञातत्वम्। अयं भावः। ब्रह्मात्मवस्तुनो विषयस्यात्यन्ताप्रसिद्धौ न विचारप्रवृत्तिः सम्भवत्युद्देश्यविषयाप्रसिद्धेः। तथा यथावत्प्रसिद्धौ च न विचारप्रवृत्तिनुपयोगात्। तथा च। केनचिद्रूपेण प्रसिद्धं ब्रह्मात्मवस्तूद्दिश्य विचारेण तद्याथात्म्यं निर्णेयम्। तदिह ब्रह्मपदस्य निरतिशयमहत्त्ववति सामान्येन प्रसिद्धत्वादात्मपदस्य च प्रतीचि सामान्येन प्रसिद्धेः "अयमात्मा ब्रह्म" इत्यादौ समभिव्याहारादैक्यस्याप्यापाततः प्रसिद्धेस्तद्विशेषस्य च पारोक्ष्यसद्वयत्वाद्य-नधिकरणत्वस्यदेहेन्द्रियमनोबुद्धिप्राणाहंकृतिविलक्षणतत्साक्षिप्रत्यगभिन्न-सच्चिदानन्दाद्वयब्रह्मरूपत्वस्य चाप्रसिद्धे सामान्यतः प्रसिद्धवस्तूद्देशेन तद्विशेषनिर्धारणाय विचारप्रवृत्त्युपपत्तिरिति। यद्वा। परोक्षतः प्रसिद्धं ब्रह्मात्म-वस्तूद्दिश्य तत्स्वरूपसाक्षात्काराय विचारप्रवृत्त्युपपत्तिरिति।

कपिलकणादादिस्मृतिसिद्धानां वेदान्तवाक्यविषयत्वात्कथं जीवब्रह्मैक्यस्य विषयत्वसंकीर्तनमिति तत्राह – तत्रैवेति। उपक्रमोपसंहारादि-भिर्लिङ्गैर्वेदान्ततात्पर्ये निरूप्यमाणे प्रत्यक्स्वरूपे ब्रह्मण्येव पर्यवसानदर्शना-त्प्रधानादिषु चादर्शनादब्रह्मैव वेदान्तविषयो न प्रधानादिरित्यर्थः। तथा च

श्रुतिस्मृती भवतः । ''सर्वे वेदा यत्पदमामनन्ति'' ''वेदैश्च सर्वैरहमेव वेद्य'' इति च ।।

तृतीयमनुबन्धमाह – सम्बन्धस्त्विवति । तदैक्यं प्रत्यग्ब्रह्मणोरैक्यं तच्च तत्प्रमेयं चेति तथा तस्येति विग्रहः । ननु कथं यथोक्तप्रमेयस्योपनिषत्प्रमाणबोध्यत्वं निर्धर्मके तस्मिञ्छब्दशक्तिगोचरत्वायोगादिति चेत्को भावः । शब्दादिहीनस्य वाच्यत्वानुपपत्तिरिति । चेन्न । अनुक्तोपालम्भात् । असङ्गस्य लक्ष्यत्वानुपपत्तिरिति चेद्यथा लक्षणावृत्त्याश्रयणेन ब्रह्मात्मैक्यप्रतिबोधस्तथोत्तरत्र वक्ष्यामः ।।

चरममनुबन्धमाह – प्रयोजनम् त्विति । तदैक्यप्रमेयशब्दः पूर्ववत् । अज्ञानं वक्ष्यमाणलक्षणम् । तस्य निवृत्तिः प्रयोजनमित्येतावत्युक्ते समूल दुःखोन्मूलनलक्षणं वैशेषिकाभिमतं प्रयोजनमभ्युपगतं प्रतिभायात् । तन्माभूदिति विशेषणान्तरोपादानम् । अज्ञाननिवृत्तिरानन्दावाप्तिश्च प्रयोजनमित्युक्ते नित्यनिरतिशयसुखाभिव्यक्तिर्निः शेष दुःखोच्छित्तिश्च प्रयोजनमिति भाट्टाभिमंत प्रयोजनं प्रतिभायात् । तन्माभूदिति तत्स्वरूपेत्युक्तम् । ब्रह्मात्मचैतन्यस्य चानन्दरूपत्व प्रतिपादितमधस्तात् । विचारजन्यज्ञानस्योक्तोभयविधं प्रयोजनमित्यत्र क्रमेण श्रुति प्रमाणयति – तरतीत्यादिना । आत्मविद्ब्रूमाख्यब्रह्मात्मसाक्षात्कारवाञ्छोकोपलक्षितसंसारमूलाज्ञानं तरत्यतिक्रामति । यः कश्चिद्ब्रह्म परमात्मानं प्रत्यग्रूपं वेद साक्षात्करोति स ब्रह्मैव भवति तद्रूप एव भवतीत्यर्थः।

नन्वविद्यानिवृत्तेर्विद्यासाध्यत्वेन प्रयोजनत्वेऽपि कथं स्वरूपानन्दस्य तथात्वं तस्य नित्यप्राप्तत्वेन विद्यासाध्यत्वाभावादिति चेत्सत्यं नित्यप्राप्त-

मप्यानन्दात्मब्रह्मस्वरूपमविद्यावस्थायां विस्मृतकण्ठगतचामीकरवदनवाप्तमिव भवति । विद्यया त्वविद्यानिवृत्तौ विज्ञातचामीकरवदभिव्यक्तिमापद्य मानमवाप्त-मिव व्यपदिश्यत इति न काचिदनुपपत्तिरिति भावः ।।



# षष्ठोऽध्यायः

## पञ्चीकरणप्रक्रियानिरुक्तिः

अद्वैतवेदान्ते ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं वायुपञ्चकंबुद्धि-मनसोचेति सप्तदशावयवात्मकं सूक्ष्मशरीरमभ्युपगम्यते। एतानि सप्तदशा-वयवान्युपर्युक्त सूक्ष्मभूतानां सत्वादिगुणेभ्युपद्यन्ते। तथाहि आकाशस्य साध्विकाशांच्छ्रोत्रमः, रजोऽशावाक् साध्विकांशाद्वामोस्त्वगिन्द्रियम्, रजो-गुणांशात् पाणीन्द्रियम्, सात्विकांशात्तेजसश्चक्षुः, रजोगुणांशात् पादेन्द्रियम्, सात्विकांशाज्वलाज्जिह्वा, रजोगुणाशांत् पायिवन्द्रियम्, सात्विकांशायाः पृथिव्याः सकाशाद् घ्राणेन्द्रियम्, तस्या एवरजोगुणांशाद् गुदेन्द्रियमित्या-काशादिपञ्चभूतानां सत्वांशाच्छ्रीत्रादीनि पञ्चज्ञानेन्द्रियाणि तथा तेषामेव रजोऽशाद्वामादिपञ्चऽग्र्नेन्द्रियाणि व्यस्तानि पृथक् पृथगुत्पद्यन्ते।[१]

एतेषां पञ्चसूक्ष्मभूतानां समस्तेभ्यः सात्विकांशेभ्योवुद्धिमनसो उत्पद्येते। तत्र बुर्द्धिनाम निश्चयात्मिकान्तः करणवृत्तिः। मनोनाम सङ्कल्पादिक तथात्मिकान्तःकरणवृत्तिः।[२] अनयोरेव चित्ताहङ्कारयोन्तर्भावः। तत्र बुद्धी-वहङ्कारस्य मनसि चित्तस्यान्तर्भावइति यावत्। एवमेवाकाशादिसूक्ष्म-

१. सत्वांशैः पञ्चभिस्तेषां क्रमाद्वीन्द्रियपञ्चकम्।
श्रोत्वगक्षिरसनघ्राणा छयमुपजायते ॥ पञ्च १/१९.

२. पञ्च० १/२०.

भूतानां समस्तेभ्यः रजोऽशेभ्यः प्राणापादोदानव्यानसमानाख्याः पञ्चप्राणाः समुद्भवन्ति।

विज्ञानवादिबौद्धानुसारेण बहिर्वस्तूनां स्वतन्त्रसत्ता न भवति। क्षणिक विज्ञानमेवतत्वम्। एतन्मतेन विज्ञानातिरिक्तघटादि पदार्थानां सत्ता न स्वीक्रियते।

घटादिविषयोऽपि .......... विज्ञानरूपोऽस्ति। भ्रमेभासमान-रंजतमपि विज्ञानरूपमस्ति, तदाकारो भवति। तथा च शुक्तिरपि विज्ञानरूपमस्ति, तथा रजतमपि। आन्तर रजतविज्ञानमेव बहिर्वदवभासेत्। वस्तुतो वाह्यता भ्रममात्रमस्ति। विज्ञानरूपेण रजतमसदस्ति, किञ्चिदरूपेणासदस्ति।

अतः इदं रजतमित्यत्र रजतस्मेदं रूपेण ज्ञानमेव भ्रमोस्ति। रजतं तु ज्ञानरूपेऽस्ति। तस्य वाह्यरूपेण बोधोभ्रमरूप एवास्ति। विज्ञानवादिनां सत्यरजतं किं वा मित्थ्यारजतमुभयमपि विज्ञानरूप भवति। आत्मख्याति-पदेनात्र विज्ञानख्यातिरेवाभिलषिता। अन्र्तविज्ञानमेवात्रात्मपदेन बोध्यते। न्यायमकरनकारेणानन्दबोधेन विज्ञानवादिनामात्मख्यातिव्याख्या तावदेवंविधा कृतास्ति, केचित्तु ज्ञानाकारस्य बहिरवभासो विभ्रम इत्याहुः।[१] शुक्तादि-रंजतमिति भ्रमान्तरं "वेद रजतम्" इति कृत्वा यदा प्रतीतिबाधो जायते, तदेदन्तारजतयोरिदन्तायाबाधाऽवगम्यते। तथा च रजतस्येदत्तारूपेण दर्शनमेव भ्रमोऽस्ति।

---

१. न्यायमकरन्द, पृ० ९९.

वैदिकैर्हि दार्शनिकर्विज्ञानवादिबौद्धानामात्मख्यातिवादस्य प्रत्याख्यानं विहितम्। विज्ञानवादिमतेन विज्ञानमात्मरूपं वर्तते, तथा रजतमपि विज्ञानरूपमस्ति। एवञ्चते "इदं रजतम्" इति न स्यादनुभवः, अपितु 'अहं रजतम्' इति भवेदनुभवः। तथा बाधोऽपि "नाहं रजतम्" इति कृत्वा भवितव्यः। परन्तु "इदं रजतम्" इति कृत्वा भ्रमानुभवो जायते तथा बाधोऽपि "नेदं रजतम्" इति रूपेण जायते। तथा च भ्रमानुभवबाधाभ्यां कल्प्यते यद् वाह्यता न भवत्यसीकैति। न खलु वाह्यतापक्षाप्या।

प्रभाकरानुसारेण "यथार्थ सर्वमेवेह विज्ञानम्"[१] सर्वं विज्ञानं यथार्थमस्ति। एतदनुसारेण भ्रमस्यते ज्ञानद्वयमस्ति। इदं रजतमिति प्रत्यक्षात्मकं ज्ञानमस्ति, रजतमिति तु स्मरणात्मकं ज्ञानमिति। उभयमपि यथार्थम्। अतो भ्रमस्यतेष्वपि न सन्ति मिथ्याज्ञानानि, अतएव सर्वज्ञानानि यथार्थानि। "इदं रजतम्" इति भ्रमे 'इदमिति' सामान्यं प्रत्ययं भवति। विशेष्युक्ति रूपेण प्रत्ययं न जायते। 'इदम्' इति सामान्यप्रत्यक्षमेव रजतस्मृतिमुद्रबोधयति, रजतस्मृतिरप्येकांशत्वे जागर्हि। अतएव यत्रदेशे सत्यरजतस्य दर्शनं जातं तस्य स्मृर्तिनभवते। केवलस्य रजतमात्रस्य स्मृर्तिजायते। इन्द्रियदोषेण शुक्तिविशेषांशस्य प्रत्यक्षं नोत्पद्यते, तेनेदमि रजतरूपस्य भ्रमो जायते। अत्र ग्रहणस्मरण विवेकाकलनेन भ्रान्ता व्यक्तिरिदमेव रजतमवबुद्ध्यते। अतः प्रत्यक्षस्मरणरूपज्ञानद्वयाख्यातिः, भ्रान्तव्यकितमिदमि रजतग्रहणाय प्रयोजयति। अयमख्यातिवादः।

---

१. प्रकरणपञ्जिका, ४/१ शालिकनाथः।

अख्यातिवादिना मतमस्ति यद् भ्रमवादिनो यं भ्रममिति जानति, नास्त्यसौ भ्रमः, अपितु यथार्थज्ञानमेव। अख्यातिवादिमते भ्रमज्ञानमेव न भवति। एतदनुसारेण "भेदं रजतम्" इति निषेधेन केवलं व्यवहारस्य बाधो जायते। ज्ञानस्यतु बाधो न जायते। ज्ञानं हि सदा बाधितं तिष्ठति। अख्यातिवादिमतेन ज्ञानस्य यथार्थतायाम्, अनुमानमित्यन जायते यथार्थाः सर्वेविमताः सन्देहविभ्रमाः प्रत्ययत्वात्, घटादिप्रत्ययवत्।[१] सन्देहविभ्रमादयः सर्वे प्रत्यया यथार्थः सन्ति, यतः सर्वाणि तु तानि ज्ञानानि, यथा घटादिज्ञानम्।

वेदान्तिभिरस्याख्यातिवादस्य खण्डनमभ्यथायि। श्रीवाचस्पति मिश्राः, मन्यन्ते, यद भ्रान्ता व्यक्तिः समक्षं रजतं दृष्ट्वा प्रवर्तते। भ्रान्तव्यक्तिनिर्वचयेन जानाति यत्समक्षं रजतं विद्यते। अतोऽख्यातिवादिनामिदं जल्पनं, यदत्र ज्ञानद्वयमस्ति किञ्चतयोर्भेदेनाग्रहणमस्ति, एषैत भ्रान्तिरित्यक्ष्यन्तमनुचितं प्रतिभाति।[२] श्रीमाधवाचार्याणां मतमस्ति यद्रजतस्मरणं भ्रान्तव्यक्तिमिदमपि प्रयोक्तं नार्हति। एवमेवेदयः प्रत्यक्षमपि भ्रान्तव्यक्तिप्रेरयितुं न शक्नोति। रजतस्य स्मरणं पूर्वदृष्टे प्रयोजयेन्नतु प्रत्यक्षदृष्टे। किञ्चन रजतस्मरणेन सहतत्तास्मरणमपि स्यात्, तथा तत्ता (अर्थात् तत्पूर्वदृष्टं रजतम्) पूर्वानुभूतरजते प्रवर्तयेत्।[३] अख्यातिवादिमतेन भ्रमव्याख्या साधीयसीकर्तुमयोग्या।

---

१. भामती, पृ० २७.
२. भामती, पृ० २७-२८.
३. स०द०स०, पृ० ८२४.

अन्यथाख्यातिवादानुसारेण भ्रमस्थले देशान्तरीयवस्तुत इदत्व-रूपेण प्रत्यक्षन्जायते। यस्य पुरत्रस्य यस्य वस्तुनोऽनुभवजन्यसंस्कारा भवन्ति, तस्य सत्यस्य वस्तुन संस्कारसादृश्यहेतुना "इदमि" तस्य वस्तुनो भ्रमो जायते। "शुक्तिरजतम्" इत्यत्र न्यायानुसारेण रजतज्ञानमेवं विशिष्टज्ञानमस्ति। अस्मिन् विशिष्टज्ञाने, इदं विशेष्यम् तथा रजतमिति विशेषणमस्ति। इदमेव विशिष्टज्ञानं न्यायनये भ्रमज्ञानमस्ति। भ्रमकारणेन शुक्तीरजतम् शुक्त्यभिन्न-रूपेण गृहीतं भवति, तथा सत्यरजतवद् तत्रेष्टसाध्यनताज्ञानं भवति। अतएव तत्प्राप्तये इच्छा जायते, इच्छया च प्रवृत्तिसद्भवति।[१]

इत्यञ्च न्यायनयेन भ्रमे देशान्तरीयरजतमपि सत्यमस्ति। समक्षे च इदमपि सत्यमेव। तत्र च तयोस्तादात्म्यसम्बन्ध एवैकः समारोपितो भाति। शुक्तो देशान्तरीयरजतप्रत्यक्षार्थं सन्निकर्षः को भविष्यति? यतोहि देशान्तरीय-पूर्वानुभूतवस्तुना लौकिकेन्द्रियसन्निकर्षस्य सम्भावना न भवति। अत्र न्याय-विदामिदमुत्तरम् यदत्र ज्ञानलक्षणानुरूपेण लौकिकसन्निकर्षण, इदं रजतस्य प्रत्यक्षं भविष्यति। भ्रमस्तस्यैव जनस्य भवति येनतद्वस्तु पूर्वं प्रत्यक्षीकृतं स्यादिति। पूर्वदृष्टपदार्थ आत्मनि संस्कारात्मनोपस्थितो वर्तते।

यदापूर्ववर्तिवस्तुतः सामान्यरूपेण ज्ञानन्जायते, तदात्मनि स्थिताः संस्काराउद्बोधिता जायन्ते, तथा पूर्वदृष्टवस्तुन स्मृति रूदभवति। स्मृतिरप्यस्ति ज्ञानम्, तस्य सम्बन्धो मनसा, तस्य चेन्द्रियेण सह वर्तते। मनः संयुक्ते-न्द्रियस्य संसर्ग इदमासह विद्यते। इत्वञ्च स्मृतवस्तुना सहेन्द्रियस्य परम्परा-

१. अद्वैत सिद्धान्त विवेचन, पृ० १४.

सम्बन्ध उत्पद्यते। पूर्वदृष्टस्याघ्रातस्य सुरभिवन्दनस्याथवा तज्जातीयस्य सुरभिवन्दनस्य यदा इरतः साक्षात्कारो जायते, तदान्तरापि घ्राणेन्द्रियसम्बन्धं केवलं चक्षुरिन्द्रियप्रत्यक्षविषयतया तत्र वन्दनेन पर्म्परासम्बन्धेन सौरभस्य प्रत्यक्षमुद्भवति। अत्र ज्ञानलक्षणयैवंविधं प्रत्यक्षं सम्भवति। तथैव "इदंरजतम्" इत्यत्रापि स्मृतरजतसंयुक्तमनसस्तथा मनः संयुक्तेन्द्रियेण रजतस्य प्रत्यक्षं न दुर्लभम्। एतच्च भ्रमज्ञानमित्यमुच्यते यदत्र शुक्तिरूपविशेष्ये शुक्तित्वत्प्रकार-कज्ञानस्य स्थाने, रजतत्वप्रकारकं ज्ञानमनुभूयते, यच्च प्राप्तकाले नोपस्थित-मस्ति।

अद्वैतवादिभिराचार्यरन्यथाख्यातैः प्रवृत्तैः प्रमाणैस्तकर्ष च प्रत्याख्यानमकारि। अन्यथाख्यातिखण्डनार्थं तैस्तन्मूलभूतज्ञानलक्षणासन्नि-कर्षस्यनिषेधः क्रियते, यश्च न्यायनयस्वीकृतोऽस्ति। विवरणकारेणान्यथा-शब्देन किमभिप्रियते इति प्रश्न उत्थापितः। ज्ञाने हि, अन्यथात्वं न सम्भवति, यतो हि रजतज्ञानलम्बनं शुक्तिः स्यादित्यसंभवदुक्तिम्। यदि रजतज्ञानमुत्पद्यते, तदा तदालम्बनं तदेव रजतं संभवदुक्तिकं वर्तते। विषयेऽन्यधात्वकल्पने प्रश्न उत्तिष्ठति यद्देशान्तररजतकेन सम्बन्धेन शुक्तोभासते?

नैयायिकैर्या ज्ञानलक्षणया शुक्तेस्तथा देशान्तरत्थरजतस्य संसर्गकल्पनोद्भाष्यते, सा नास्ति समीचीना सङ्गतावा। "सुरभिचन्दनम्" इति यस्य ज्ञानलक्षणाकृते यो दृष्टान्तउपक्षिप्यते, सो पि चाद्वैतवेदान्तिर्भि-नाङ्गीक्रियते यतोऽद्वैतिनः सुरभिचन्दनमित्यत्रज्ञानलक्षणां न मन्यन्ते। सौरभं हि घ्राणेन्द्रियजन्यज्ञानविषयः। घ्राणेन्द्रियविषयश्चक्षुरिन्द्रियविषयो भवितुं

नार्हति। अतः सौरभनुमानं तत्र विधीयते। सुरभिचन्दनमिति वानुमितिज्ञानमस्ति, ''इदंरजतम्'' इत्यत्र 'रजतम् इति प्राथमिकप्रत्यक्षज्ञानमस्ति। अतस्तस्य तदास्मरणमसंभवम्। स्मरणमन्तरा ज्ञानलक्षणा न सम्भवति। यद्वस्तु यदवच्छेदेनानुभूयते, तद्वस्तु तदवच्छेदेन ज्ञानप्रत्यासरितः स्यात्, अयं नियमोऽस्ति। अतोज्ञानलक्षणया भ्रान्तिज्ञानं न व्याख्यातुं योग्यम्, यतस्तत्प्रत्यक्षानन्तरं योऽनुव्यवसाय उत्पद्यते, तेन ज्ञातम् भवति, यदुक्तस्थले सौरभप्रत्यक्षार्थं नास्तिन्द्रियोल्लेखः। सुरभिचन्दनामित्यस्य सामान्यज्ञान मात्रं भवति।

प्रवृत्तिद्वारेणापि अन्यथाख्यातेः व्याख्या दातुं न शक्यते। अन्य व्याख्यातिरीत्या देशान्तरीयरजतार्थंदिशान्तर एव प्रवृत्तिः स्यात्। किन्तु प्रवृत्तिस्तु पुरोवर्तिनि वस्तुनि जायते। इत्थमेव बाधज्ञानमपि नास्त्यन्यथाख्यात्यनुकूलम्। ''नेदं रजतम्'' इति बाधवुद्धिः पुरोवर्ति नास्ति रजतम् इत्थं रूपेण जायते। यदि केवलं संसर्गारोपि एव जायेत यदा पुरोवर्तिनि रजतं नास्ति इत्येवंविधं समुत्पद्येत्। इत्थन्तु सा न भवति, तथा चान्यथा ख्यात्या कमव्याख्यानमुपस्थातुमशक्यम्।

**जीवनस्यकतृत्वमथ ज्ञातृत्वम् –**

अद्वैतवेदान्तिनो जीवनस्य कर्तृत्वम्, भोक्तृत्वं ज्ञातृत्वन्या ध्यासिकं मन्यन्ते। कल्पितत्वेन वस्तुतस्ते नात्मधर्माः, अपितु मित्थ्यासन्ति। आत्मनः कतृत्वज्ञानतृत्वभोक्तृत्वादिविषयेऽद्वैतमतस्य, वैष्णववेदान्ति रामानुजमाध्वनिम्बार्कप्रभृतयः प्रत्याख्यानं विदधति।

वैष्णवदार्शनिका आत्मनः कतृत्वभोक्तृत्वभावं यथार्थ मन्यन्ते। तन्मतेन वस्तुतः आत्मा कतृत्वभोक्तृत्वधर्मवानास्ति। श्रीरामानुजाचार्येण स्वीय श्रीभाष्यजिज्ञासाधिकरणस्यमप्तसिद्धान्ते, आत्मनोज्ञातृत्वादिगुणा यथार्था इति प्रतिपादितम्। तद्रीत्यात्मा कर्ताभोक्ता च भवति। रामानुजवत् निम्बार्क वेदान्तिनोऽपि चात्मनउक्तगुणान् यथार्थान्वदन्ति। आचार्य मधुमाधवमुकुन्देनापि स्वपरपक्षगिरिवज्रनामग्रन्थेऽहमर्थस्यानात्मनः प्रतिवाद कृतस्तथात्मविषयककर्तृत्वभोक्तृत्वादिकस्य यथार्थत्वमुक्तम्, एवं तेषामध्यस्तभावस्य प्रत्याख्यानं कृतम्।[१]

द्वैतवादि जयतीर्थेन स्ववादावलिग्रन्थे, तथा व्यासराजेन न्यायामृतग्रन्थे निरुक्त कर्तृत्वभोक्तृत्वस्याध्यस्तभावस्य प्रबलैः प्रमाणैः प्रत्याख्यानमारम्भि। अमीषां दार्शनिकां मतमस्ति यदात्मनोऽहमर्थत्वं स्वाभाविकमिति। इत्थमेव ज्ञानं कर्तृत्वादयोऽप्यात्मनि स्वाभाविका गुणाः सन्ति। जीवनस्यकर्तृत्वम् तथा ज्ञातृत्वमद्वैतमते मित्थ्याऽस्ति। आचार्य श्रीशङ्करभगवत्पादेनाऽममेतिलोकव्यवहारोऽध्यासमूलकोऽस्ति; इति स्वकीयाध्यासभाष्ये, उक्तम्। तत्मतेऽहंव्यवहारोऽप्यध्यासपूर्वकः ततश्चाहं विषयो व्यवहारोध्यासपूर्वकोऽस्ति तेन मित्थ्यास्ति। आचार्यमधुसूदनसरस्वतीमहाभागेनाद्वैतसिद्धावनुमानद्वाराऽहमर्थस्थानात्मत्वं साधितम्। अनेकैश्च तर्कैस्तैरिदं साधितम् यत्कर्तृत्वादयो गुणा आत्मनि, अन्तः करणरणाध्यासमूलकः सन्ति।

---

१. श्रीभाष्यम् महासिद्धान्तपक्षः।

वस्तुरूपेण तेषां गुणानां सम्बन्धः शुद्ध आत्मनिनास्ति। विशुद्धचेतनस्यत्वाकाशवन्निर्लेपास्तिष्ठति।[१] यदि वाह्यमर्थ आत्मनो वास्तविकं स्वरूपम् भविष्यत् इति तदा सुषुप्तिदशायां तद्विरहो नास्त्येयत्। अद्वैतमते-ऽहप्रत्ययबोधित आत्मा वस्तुतो नात्मास्ति। श्रीमधुसूदनसरस्वती महाभागेन स्वगन्थेऽद्वैतसिद्धिनाम्नि, अनुमानद्वाराऽहमर्थस्यानात्मत्वं साधितम्। अनुमान-प्रकारश्चायम् – अहमर्थानात्मा, अहं प्रत्यय विषयत्वात् शरीरवत्[२] अर्थादह-पदेन योऽर्थः समर्प्यते, स आत्मा नास्ति यतः सोऽहंविषयकोऽस्ति। यथा शरीरम्। शरीरेऽहं शब्दस्य प्रयोगो भवति, स चानात्मास्ति, अतोऽहं प्रत्ययविषयो वस्तुतोआत्माऽस्ति। इत्थमेवाऽद्वैतासिद्धिकारेणाहंप्रत्ययविषय आत्मभिन्नः, अहंशब्दाभिधेयत्वात् अहंकार शब्दाभिधेयवत्।[३]

अर्थादहंपदार्थ आत्मभिन्नोऽस्ति, यतोऽयमहंज्ञानविषयोऽस्ति। येन तु प्रकारेण अहं शब्देन शरीरस्य बोधोजायतेऽहं स्थूलो कृतज्ञ इत्यादि रूपेण। नायमात्मबोधः। यतोऽहं प्रत्ययेऽध्यस्तात्मबोधेनात्मा न गम्यते शरीरं बुध्यते, शरीरे आत्मबुद्धिः शुद्धात्मबुर्द्धिन भवति। शरीरमात्मेति केलवं भौतिकवादिनो जल्पन्ति। अभौतिकवादिनस्तु केऽपि शरीरमात्मेति न प्रतिपद्यन्ते। अत एवाहंशब्दबोध्य आत्मा वास्तविकादात्मनो भिन्नोऽस्ति। स नास्तिशुद्धात्मा।

वैष्णवदार्शनिका वदन्ति यदद्वैतिनोऽहंकारेण सह चेतनस्याध्यासं मन्यते। अध्यासमनु च मिथ्याहंकार उत्पद्यते। अतोद्वैतिभिर्यन्तव्यम् भवति

१. ब्र०सू०शा०भा०, पृ० १६-१७.
२. अ०सि०, पृ० ६०७-६१२.
३. अ०सि०, पृ० ६०२-६०३.

यद्विशुद्धश्चेतनोऽध्यस्ताहंप्रत्ययस्य विषयो भवति यदासावहंप्रत्ययस्य विषयस्तदाऽसौ मिथ्यापिस्यादेव यतोऽसावात्मेव सिद्ध्यति। अतः प्रथमानुमानं व्यभिचारग्रस्तं भवति। अधिष्ठानभूतेऽस्मिन् खल्वहंकारस्य मिथ्या-संसर्गोभागत्यागलक्षणया जायते तेन शुद्धश्चेतनोऽनात्मा भवितुं नार्हति। इत्थन्द्वितीयाऽनुमानेऽपि वैष्णवदार्शनिका हेतुव्यभिचारकवलितं कथयन्ति। वैष्णवाचार्या अनेकाभिर्युक्तिभिस्तर्कवदात्मानं ज्ञातृत्वकर्तृत्वविशिष्टं साधयन्ति तथाहं प्रत्ययगोचरमपि जल्पन्ति। परन्तु अद्वैतिनआत्मनस्तान् गुणाननेकाभिर्युक्तिभिस्तर्कश्चाध्यस्तानेव स्वीकुर्वन्ति। अद्वैतिनो मनन्ति, अन्तःकरणेन सहात्मनोऽध्यासेन हेतुनान्तःकरणवृत्तिः कर्तृत्वभोक्तृत्वज्ञातृत्वत्वादयोधर्मा मिथ्या विलसन्ति। वस्तुतः कर्तृत्वादयो धर्मा मनस एव भवन्ति।[१] अतएव-ज्ञानिनोऽकर्तारमात्मानं कर्मेति जानन्ति, अध्यस्त ज्ञातृत्वशाहहं सातेति वदन्ति। यतस्तु ज्ञातृत्वमात्मनो वास्तविको धर्मोनास्ति, आत्मा हि ज्ञानस्वरूपम्, जीवात्मविषये योऽहंकारोऽस्ति तस्यांशद्वयमस्ति, एकोऽधिष्ठानरूपः शुद्धोऽशोऽपरस्त्वन्तःकरणस्य योऽविद्यापरिणामो चदंशः। अद्वैतिमतेन ज्ञातृत्वसम्बन्धोऽन्तःकरणेन साकमस्ति। शुद्धोचिदध्यासेन स्वात्मात्मानं नामाहंकर्तृति बुध्यते।[२] आचार्यपद्मपादेन पञ्चपादिकाग्रन्थे व्याहृत यथा स्फटिकमणो जपाकुसुमाध्यासेन मिथ्यारूणिमविभ्रमो जायते, तथैवात्मनि-कर्तृत्वादि प्रतिभासोऽपि मिथ्यास्ति।[३]

---

१. अ०सि०, पृ० ६१२.
२. पञ्चदीपिका, पृ० ३२.
३. तदेव, पृ० १००-१०१.

अस्मिन् विषये प्रश्नोऽयमुत्तिष्ठति, यत् ''कर्ताशास्त्रार्थवत्वात्''[१] द्वोऽत एव[२] अनुज्ञापरिहारो देहसम्बन्धाज्ज्योतिरादिवत्''[३] एषु सूत्रेषु सांख्योक्ता चेतनाया बुद्धेः कर्तृत्वं निषिद्धम्। तथा चेतन आत्मा कर्तेति साधितः। एवं सति कथमुच्यते यदबुद्धिस्थकर्तृत्वमात्मन्यारोप्यत इति। किमेवकथने पूर्वोक्तसूत्रम् भाष्यप्रतिपादित सिद्धान्तस्य विरोधो न भवति। अस्य समाधानमद्वैतिन एवं वदन्ति सत्यमेतद् यत् ''कर्ता शास्त्रार्थवत्वात्'' इति सूत्रे, आत्मनः कर्तृत्वमुक्तं परन्तु तत्कर्तृत्वमस्य सत्यमेवेति च नोक्तम्। परवर्ति सूत्रभाष्ये ''यथा च तक्षोभयथा'' (ब्र०सू० २/३/४०) भाष्यकृद्भिरुक्त कल्पितमात्मनः कर्तृत्वं स्वाभाविकं च भवति। अस्य समर्थनं ''न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अर्थादात्मनः स्वाभाविकर्कतृत्वसम्भवं नास्ति, इत्युक्त्वा क्रतमस्ति।[४] आत्मनः कर्तृत्वं नानयुक्तिद्वाराध्यासिकं साधितम्। यदि चात्मनः कर्तृत्वं स्वाभाविकं भवेत् तदा तत्कदाचिदपि नापहीयेत तथा चात्मनो मुक्तिरसम्भवाभवेत्।[५] श्रीशङ्करभगवत्पादेनात्मनः कर्तृत्वस्य दुःखल्पमुक्तत्। कर्तृत्वमस्ति गुणोऽर्थाद् धर्मोऽस्ति सति धर्मेऽवश्यं दुःखमपि स्यादेव। यदि स्वाभाविकं कर्तृत्वं तदा न स्याद् दुःखादिमुक्तिम् ननु कर्तृत्वं यदि वुद्धेस्तेनात्मनो दुःखित्वं कथमिति ? तथा मुक्तेरपि का आवश्यकता? इति चेन्न बुद्धेर्धमानध्येसात्मनिमत्वा दुःखीभवत्यात्मा, तेन ततो मित्थ्याध्यासान्मुक्तिः

१. ब्र०सू० २/३/३३.
२. तदेव २/३/१८.
३. तदेव २/३/४८.
४. ब्र०सू०शा०भा०, पृ० ६१५.
५. ब्र०सू०शा०भा०, पृ० ६१६.

प्रार्थ्यते। इदन्तु प्रागुक्तं यत्कर्तृत्वाश्रयो वस्तुत आत्मा नास्ति। उक्तोऽयमर्थो गीतायाम्, यऽन्त्रिगुणमयी प्रकृतिः सर्वप्रकारेण कर्माणि सम्पादयति। अहंकाराध्याविमूढ़स्त्वात्मा स्व कर्तारं जानाति। शुद्धं तु चेतनं यः कर्तेति जानाति, तस्य दृष्टिर्भ्रान्त्यास्ति। स नास्ति तत्वदर्शी।[१] आत्मनः स्वाभाविकं कर्तृत्वमुपपादयितुं वैष्णववेदान्तिनोऽनुमानमिदं पठन्ति। अद्वैतसिद्धिकारेण पूर्वपक्षतया तदनुमानमुल्लिखय्य, तस्य प्रत्याख्यानं कतमस्ति। अनुमानन्चेत्थम्–आत्मा, मोक्षसाधनकृतिमान्, तत्पदान्वयित्वात् सम्भवत्।[२] अर्थादात्मा मोक्षसाधनविषयककर्तृत्ववानस्ति यतस्तत्फलेन स एव पक्षवान्भवति। अनेनानुमानेन चेदात्मनि काल्पनिकं कर्तृत्वं साध्यते तदाद्वैतिनां नास्ति कापि हानिः। स्वाभाविकमेव कर्तृत्वमद्वैतिनां नास्ति सम्मतम्। स्वाभाविकं कर्तृत्वन्तु नात्मनि स्वीकारयोग्यम्। लघुचन्द्रिकाकारेणोक्तानुमाने व्यभिचार उद्भावितो येन च तत्साध्यं साधयितुं न पारयति।

आत्मनः कर्तृत्वविषयेऽपि शास्त्रे प्रमाणानि सन्ति तथाऽकर्तृत्व-विषयेऽपि। अतः उभयविधशास्त्रप्रामाण्याय, आत्मनः कर्तृत्वमाध्यासिक-भवगन्तव्यम्, इत्थं सत्यकर्तृत्वमारोपित कर्तृत्वमुभयमपि सिद्धं भवति।

यथात्मनः कर्तृत्वं भ्रान्तिविजृम्भितम्, तथा ज्ञातृत्वमप्यव-गन्तव्यम्। आत्मास्ति ज्ञानरूपम्। सुषुप्तावहं न भासते, स्व प्रकाशात्मादीप्यते। अतः सिद्धमिदं तस्मिन्नस्ति ज्ञातृत्वम्। अन्तःकरण द्वारा तदात्मनि विलसितम्।

---

१. गीता।
२. अ०सि०, पृ० ६११.

अद्वैतानुसारेण ज्ञानआत्मगुणोनास्ति, आत्मा तु ज्ञानमूर्तिः। अत आत्मा ज्ञातेति भान्तिः। तथा सति ज्ञानतदात्रयभेदः स्यात्। इदमद्वैतिनो नाभीष्टम्। तन्मते ज्ञानात्मनोरभेदोऽस्ति। एतेव्यावहारिकज्ञानकर्तृत्वादीनात्मनि न निवारयन्ति, इत्थं तेन शुद्धमात्मचेतनं ब्रह्माभिन्नं निरूपयन्ति।

**स्वतन्त्रं जीवकर्तृत्वं किम्पेश्वराधीनम् –**

अद्वैतिमतेन कर्तृत्वादयोऽध्यासमूलकाः सन्ति, इदं प्रागेव निवेदितम्। अद्वैतवेदान्त ईश्वरवादिदर्शनम्। ब्रह्मसूत्रेपरात्तु तच्छ्रुतेः २/३/४१ सूत्रेऽस्मिन्नुक्तम अज्जीवनस्य कर्तृत्वं प्राप्तं तत्परस्माद् भवति। ईश्वराद्भवति आचार्य श्रीशङ्करभगवत्पादेनोक्तं यज्जीव शुभाशुभकर्मणि परमेश्वरः प्रोरयति। स्वातन्त्र्येण स कर्मपत्तनियन्ता ने भवति।[१] उक्तवाचायमर्थं उपनिषत्सु यथाहि– मूर्ध्वलोकेषु निमीषति टम्पूर्णकर्माणि कारयति, अथोनिमीषुश्च वापकर्माणि। परमेश्वरो न कस्य शुत्रुर्नवामित्रम्। स च रागद्वैषोत्तीर्णः। ईश्वरः कस्यचित्कृते शुभंवाऽशुभं वानाचरति। न नास्तिकस्य पक्षपाती। कर्मानुसारन्त फलेन योलयति। यथप्युपरिलिखित श्रुतिसूत्रानुसारेण प्रतीयते। यदीश्वरोध्वार्थोलोक-नेताऽस्ति। इत्थं सत्येकसत्तस्य पक्षपातित्वमापतति, जीवस्य स्वतंत्रता भज्यते च। इत्थं सति जीवः किमिव कर्मणि प्रवर्तते? कथं वा न्यायशीलः सिद्ध्येत? अनैनीश्वरै पक्षपातित्वं, करुणापरत्वञ्च विरुद्ध्यते ईश्वरो जीवकर्मसापेक्ष एव शुभाशुभफलानि सृजति तेनाद्वैतमतेनायमाक्षेयोऽवतरति।

---

१. ब्र०सू० ५१९-५२०.

वस्तुदृष्ट्या परमेश्वरो रागादिषुयोऽपि, जीवादृष्टवशात्तु तं शुभेऽशुभे वा कर्मणि प्रेररति। इत्थं सति जीवकर्मकर्तृवेश्वरतन्त्रास्ति। परमेश्वरः प्रयोजको अपरः प्रयोज्योऽस्ति। ननु सर्वप्रथमं जीवोऽविधागस्तो यदा प्रयतते तदा केन कर्मणेश्वरस्तं प्रेरयतीति चेन्न, कर्मपरम्पराया अनादित्वेन पूर्वपूर्वकर्मद्वारेश्वरस्य प्रेरकत्वमायास्यति। तथा च सर्वप्रथमप्रश्नस्य कथैवकेति। कर्मपरम्परासिद्धा पूर्वपूर्वकर्मद्वारेश्वरोऽग्रेऽग्रेतं प्रेरयति कर्मणि। यस्यापि स कर्मणि स्वतन्त्र इति प्रतीयते तथापि पूर्वपूर्वकर्मादृष्टानिगडितः कथमयं स्वतत्रतामुपेयात्? कर्मणामनादिश्रृंखला भाविकर्मसु प्रभावं पातयेत्। भाविकर्मनिर्धारणं पूर्वकर्माणि दृष्ट्वा, परमेश्वरोविधास्यति।

अन्यामवस्थायाम् नास्तीश्वरस्य स्वतन्त्रता यदासां जीवान-स्वकृपाद्व्यासशुभकर्मानुष्ठान एव प्रेरयेत्, न वा जीवः स्वपूर्वकर्मपरम्परा शुभाऽशुभा वा स्यात्, सम्पति शुभान्येव कर्मोण्यनुष्ठा तु मात्मानं योजयेर्दित्वस्ति स्वतन्त्रतः। स पूर्वकर्मश्रृंखलामनाहत्य किमपि कर्तुं प्रर्भुनास्ति। इत्थं पूर्वकर्मपरम्पराधीनोऽप्यंसावीश्वराधीनोऽप्यस्ति, किन्त्वीश्वरेच्छापि तस्य पूर्वकर्मानुवर्तन्यस्ति। यतो हि सृष्टिरीश्वरलीलालस्ति, तथैव जीवपूर्वकर्म-परम्परापि, ईश्वरलीलैवास्ति। स्वयं परमेश्वरोऽपि लीलाधीनः सोऽपि लीला-पूर्वकोऽस्ति। अर्थाल्लीलयालीलाधीनोऽस्ति। इत्थमीश्वरो न्यायं प्रवर्त्यन्नपि स्वतन्त्रोऽस्ति। स च तावान्स्वतन्त्रोऽस्ति यथा बालः स्वकीयऽनेकसंसारं विनाशयति, तथा सृजत्यपि। तावान्परतन्त्रोप्यस्ति यथा चोद्योगपर्तिवस्तु-निर्माणे स्वकर्मकराधीनः। एवमेव जीवोऽपि स्वकर्मश्रृंखलातिगडितोऽपि इत्थमस्ति कर्मसु स्वतन्नो मथानादिकर्मपरम्परायां यान्यपि कर्माणि तदनुष्ठाने-

ऽसावस्ति स्वतन्त्रो यदिमानि मया स्वयमुनष्ठितानि। तावानस्ति स्वतन्त्रो यथा कश्चन् स्वस्मै बन्धनवागुरां निर्माय विचारयेद् तत्र बद्धोऽत्रबन्धनेऽहमस्मि स्वतन्त्रः। अर्थाबन्धनबन्धने यानि कर्माणि तेन कृतानितत्कर्मकरणेऽप्यसो स्वतन्त्रएवावर्तत, न तानि केनचिदन्येन कृतानि। तस्मादशावत्ति स्वतन्त्रः। कथ्यते यत्कर्मानुष्ठाने जीवःस्वतन्त्रः वस्तुस्थितिरमं यत्कस्याचित्कर्मणश्चयने नानाविधानि सन्ति कारणानि। तैः प्रभावित एवायं स्वकर्ममार्गर्निधारणे स स्वतंत्र इत्युच्यते, परन्तु विकल्पेष्वन्यतमचयनेऽसौ बहुभिरज्ञातहेतुभिर्नियमितो भवति। तस्यविचारशक्ति शांतहेतुभिर्नियमिता भवति। इत्थं नियामकानामपि सुदीर्घायाति परम्परा तदा केनरूपेणास्त्ययं स्वतन्त्रः कर्ता? अद्वैति न ईश्वरधीनोऽप्ययं स्वतन्त्र इति निमदन्ति। अयमभिप्रायं ईश्वरेच्छातन्त्रेपि-कर्मानुष्ठाने स्वतन्त्रास्ति। इत्थं सीमितस्वतन्त्रतयैव स्वतन्त्रता। प्रतीयते च विचारणेन यत्कर्मचयने वयं स्वतंत्रता इव भवाम, किन्तु सुदूरपूर्वप्रभावाणां नयमज्ञातारस्तिष्ठामः तेनेत्थं भाति। वस्तुतः सीमितार्थे स्वतन्त्रतैव जीवस्व-तन्त्रतास्माकं प्रतिभाति।

एवं पञ्चीकृतपञ्चमहाभूतेभ्यः समुत्पन्नानिचतुर्विंशरीराणि भोग-साधनामिति भोगायतनशब्देन व्यवह्रियन्ते। तदुक्तं श्रीशङ्करभगवत्पादैः —

**पञ्चीकृतमहाभूत सम्भवंकर्मसञ्चितम् ।**
**शरीरं सुखदुःखानां भोगायतनमुच्यते ।।** इति ।।

इमानि शरीराणि स्थूलभोगायतनत्वात् स्थूलशरीराणीति, अन्न-विकारत्वाच्चान्नमयकोश इति चाख्यायन्ते। अत्र समष्टिस्थूलशरीराभिमानि

चैतन्यं विराडिति, व्यष्टिस्थूलशरीराभिमानि चैतन्यं विश्वइत्यभिधीयते। एवं पञ्चीकृतपञ्चमहाभूतेभ्यः स्थूलपपञ्चोत्पत्तिः। तत्रस्थूलशूक्ष्मशरीरयोः कारणीभूताऽविद्यो कारणशरीरमित्यभिधीयते। कारणशरीरापरपर्यायेयमविद्याऽनादिरूपा, मलिनसत्वगुणप्रधाना च भवति। एतन्मलिनसत्वं पुण्यकर्मापत्तानुभवकालेऽन्तर्मुखं मायास्यति। तथा च सर्वप्रथमप्रश्नस्य कथैवकेति। कर्मपरम्परासिद्धा पूर्वपूर्वकर्मद्वारेऽग्रेऽग्रेतं प्रेरयति कर्मणि। यस्यापि स कर्माणि स्वतन्त्र इति प्रतीयते तथापि पूर्वपूर्वकर्मादृष्टनिगडितः कथमयं स्वतन्त्रतामुपेयात्? कर्मणामनादिशृंखला भाविकर्मसु प्रभावं पातयेत्। भाविकर्मनिर्धारणं पूर्वकर्माणि दृष्ट्वा, परमेश्वरोविधास्यति।

अन्यामवस्थायाम् नास्तीश्वरस्य स्वतन्त्रता यदासां जीवानस्वकृपाद्व्यासशुभकर्मानुष्ठान एव प्रेरयेत्, न वा जीवः स्वपूर्वकर्मपरम्परा शुभाऽशुभा वा स्यात्, सम्प्रति शुभान्येव कर्माण्यनुष्ठातु मात्मानं योजयेर्दित्वस्ति स्वतन्त्रः। स पूर्वकर्मशृंखलामनादृत्य किमपि कर्तुं प्रर्भुनास्ति। इत्थं पूर्वकर्मपरम्पराधीनोऽप्यसावीश्वराधीनोऽप्यस्ति, किन्त्वीश्वरेच्छापि तस्य पूर्वकर्मानुवर्तन्यास्ति। यतो हि सृष्टिरीश्वरलीलास्ति, तथैव जीवपूर्वकर्मपरम्परापि, ईश्वरलीलैवास्ति। स्वयं परमेश्वरोऽपि लीलाधीनः सोऽपि लीलापूर्वकोऽस्ति। अर्थाल्लीलयालीलाधीनोऽस्ति। इत्थमीश्वरो न्यायं प्रवर्त्यन्नपि स्वतन्त्रोऽस्ति। स च तावान्स्वतन्त्रोऽस्ति यथा बालः स्वकीडनकसंसारं विनाशयति, तथा सृजत्यपि। तावान्परतन्त्रोप्यस्ति यथा चोद्योगपर्तिवस्तुनिर्माणे स्वकर्मकराधीनः। एवमेव जीवोऽपि स्वकर्मशृंखलातिगडितोऽपि इत्थमस्ति कर्मसु स्वतन्त्रो यथानादिकर्मपरम्परायां यान्यपि कर्माणि तदनुष्ठानेऽसावस्ति स्वतन्त्रो यदिमानि

मया स्वयमनुष्ठितानि। तावानस्ति स्वतन्त्रो यथा कश्चन् स्वस्मै बन्धनवागुरां निर्माय विचारयेद् तत्र बद्धोऽत्रबन्धनेऽहमस्मि स्वतन्त्रः। अर्थाद्बन्धनबन्धने यानि कर्माणि तेन कृतानि तत्कर्मकरणेऽप्यसो स्वतन्त्रएवावर्तत, न तानि केनचिरत्येन कृतानि। तस्मादशावत्ति स्वतन्त्रः। कथ्यते यत्कर्मानुष्ठाने जीवः स्वतन्त्रः, वस्तुस्थितिरयं यत्कस्याचित्कर्मणश्चयने नानाविधानि सन्ति कारणानि। तैः प्रभावित एवायं स्वकर्ममार्गनिर्धारणे स स्वतंत्र इत्युच्यते, परन्तु सत् स्वरूपानन्दस्य प्रतिबिम्बभाग् भूत्वाऽऽनन्दमयकोश इत्याख्यायते। पुण्य-कर्मफलभोगोपरमे च तन्निद्रारूपेण विलीयते। अस्य चेष्टदर्शन लाभ-भोगेषु प्रिय-मोद-प्रमोदाख्या वृत्तयो भवन्ति। एवं कारणशरीरे आनन्दमयाख्य एक एव कोशः एतद्व्यष्टिकारणशरीरोपहितं चैतन्यं प्राग्जीव इति, समष्टिशरीरोपहितं चैतन्यमव्याकृत ईश्वर इति च कथ्यते। तदेषां च पञ्चोत्पत्तिरद्वैतसिद्धान्तेऽप्यारोप इत्युच्यते। पुनः प्राणिनां परिपक्वकर्मपरिसमाप्तौ चेश्वरेच्छया समस्तस्थूल-प्रपञ्चस्य विलयो भवति। अयं विलयोऽपवाद इत्याख्यायते।

उपर्युक्त सूक्ष्मप्रपञ्चकारणमृतान्य पञ्चीकृत पञ्चसूक्ष्मभूतानि व्यवहारासमर्थानीति कृत्वा तदीयस्थोल्यापेक्षायां व्यवहर्तृप्राणिजातधर्माधर्मा-पेक्षयैव तानि सूक्ष्मभूतानि पञ्चीकृतानि भवन्ति। पञ्चीकरण प्रक्रिया सूक्ता श्रीमता विद्यारण्यस्वामिना —

**द्विधा विधाय चैकेकं चतुर्धा प्रथमं पुनः ।**
**स्वस्वेतरद्वितीयांशेर्याजनात्पञ्चपञ्च ते ।।**

**अस्यायमर्थः — पञ्चभूतानि प्रथमं प्रत्येकं द्वैविध्यमापयन्ते।**

तेष्वाकाशादिषु दशसु भागेषु प्रथममिमानि पञ्चभागान् प्रत्येकं चतुर्धा समुं विभाज्य स्वार्थ परित्यागेन चतुर्णा प्रत्येकं भागान्तरेषु सन्निवेशेन भूतानि पञ्चीकृतानि, अर्थात् स्थूलानि भवन्ति। एवं स्थूलत्वाभयन्नापि भूतानि यदा स्वस्वकार्योत्पादनसमर्थाति भवन्ति, तदा आकाशेशब्दः, वायो शब्दस्पर्शा, अग्नौशब्दस्पर्शरूपाणि अप्सुशब्दस्पर्शारूपरसाः, पृथिव्यां शब्दस्पर्शरूप-रसगन्धाख्या अभिव्यञ्जयन्ते।

एतेभ्यः पञ्चीकृतेभ्यः स्थूलभूतेभ्यः भूर्भुवः स्वमहर्जनस्तवः सत्यमित्ये तन्नामकानामुपर्युपरि विद्यमानानां सप्तोर्ध्वलोकानाम्, अतलवितल-सुतलरसातलतलातलमहातलपातालनामकानामथोऽथो विद्यमानानां सप्ताद्यो-लोकानां तदन्तर्वर्तिजरायुजाण्डजोद्भिज्जस्वेदजाख्यानां चतुर्विधधाराणां तदु-विज्ञानामपन्नपानादीनां चोत्पर्त्तिभवति। तत्र जरायुभ्यो जातानि मनुष्पश्वादीनि जरायुजानि, अण्डेभ्यो जातानि पक्षिपन्नगादीन्यण्डजानि, भूमिमुद्भिपजातानि कक्षवृक्षादीन्युद्भिज्जानि, स्वेदेभ्यो जातानि युकामशकादीनि स्वेदजानीति बोध्यम्।



# सप्तमोऽध्यायः

## मोक्षविचारः

तदत्यन्त विमोक्षोऽपवर्गः इति गौतम सूत्रं वर्तते। तेन दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः मोक्ष। आत्यन्तिकी आत्मनः दुःखनिवृत्तिः। अत्र आत्यन्तिकी नाम तज्जातीयात्यन्ताभाव विशिष्टत्वम् दुःखात्यन्ताभावो वा कथं भवति। कारणमात्रोच्छेदात् अर्थात् दुःखस्य यावत्कारण नाशे सति दुःखात्यन्ताभावः उत्पद्यते। स एवं मोक्ष प्रमाण प्रमेयेत्यादिसूत्रं प्रतिपादित-तत्त्वानां तत्त्वज्ञानात् मिथ्याज्ञाननिवृत्ति मिथ्याज्ञाननिवृत्या दोषनिवृत्तिः दोष-निवृत्या प्रवृत्तिनिवृत्ति प्रवृत्तिनिवृत्या जन्मनिवृत्तिः जन्मविवृत्या एकविशति-दुखात्यन्त निवृत्तिरूपः मोक्ष इति व्यापदर्शन सिद्धान्त। अत्र प्रश्न उदेति दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः कथं भवति। तत्र उच्यते उपात्तस्य जन्मनोहानम् अन्यस्य चानुपादनम् अत्र हानं हानिः अनुपादानम् अप्राप्तिः अत्र मुक्तितत्वविदः वदन्ति मोक्षाख्यामवस्थां दशाम् अविनाशिनीम् अपवर्ग सञ्ज्ञिकां वदन्ति।

अत्र प्रश्न उदेति यत् दुःखस्य निवृत्ति तत्पुरुषार्थोनास्ति। एवं नैव वक्तुं शक्यते। कथमिति चेत् य असत्यः अस्ति अकाम्यः वर्तते असाध्यः वर्तते यस्य नाशः दोषमयः स एव अपुरुषार्थः मोक्षस्तु प्रमाणसिद्धत्वात्

सत्यं एव। सर्वें अभ्युपगम्यते सर्वेः अभ्युपगतत्वात् काम्योपि। दुःखन्तु स्वः भावत् सर्वेषां त्याज्यमेव। दुखस्य त्याग सुखंप्रति हेतुर्नास्तिः।

ततमोक्षः अभयम् नास्ति कुतोभयं येन तत्तथा अजरम नास्ति जरायेन तत्तथा अमृत्युपदं न मृत्युर्येन तत्तथा पदं ब्रह्मपदं प्राप्नोति तेन अभावरूपत्वं मोक्षस्य निरस्तम् मोक्ष दशायांनित्य सुखानुभूतिः भवति नित्य नित्यस्य विज्ञान मानन्दम्ब्रह्मेति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभावं सुखं प्राप्यते तेन ब्राह्मणो नित्यत्वात् सुखस्यापि नित्यत्वं जातम्।

तेन अभिव्यक्तेन अत्यन्तं विमुक्तः सुखी भवति इति केचन मीमांसकाः वदन्ति दुःखाभावः सुखस्य मध्येव्याप्तिः वर्तते इति वक्तुं न शक्यते। व्याप्तेः असिद्धत्वात् दुःखभावः सुखेन न व्याप्तः। सुषुप्तावस्थां दुखभावसत्वेऽपि सुखं नास्त्येव। तदुपरि उच्यते यत दुखाभावः सुखेन व्याप्तो मास्तु किन्तु सुखन्तु दुःखाभावेन व्याप्तं वर्तते। कथमिति चेत सुखे सति दुःखाभावस्य अवश्यमेव वर्तमानत्वात्। अत् दुःखाभावार्थ सुखस्य।

**मोक्षोऽनुभवगम्योऽस्ति –**

मोक्षः कोऽपि गमनागमन पदार्थो नास्ति शरीरञ्च इमं न प्राप्नोति। आत्माइममनुभवति। आत्मैव विधया स्वकीयं सम्पूर्णाज्ञानं दूरीकृत्य मुक्ति-सुखमनुभवति यथा किमपि वस्तु अनावृत्तं क्रियते तथैवाज्ञानेनाऽऽकृतं ज्ञानमनावृतं क्रियते अथवाज्ञानाऽवरणं पराक्रियतेतदाऽत्मा स्वयमात्मानं ब्रह्मावस्थायामनुभवति। अयमेव मोक्षः अतोज्ञानेन संसारिक बन्धनस्य नाशात् एवं मोक्षोऽनुभूयते। ये मनुष्या विद्यां चा अविद्या तयोः स्वरूपेण

ज्ञात्वाऽनयोर्जड़चेतन साधका सन्ति इति निश्चितये सर्वान शरीरादिजड़पदार्थान तथा चेतनमात्मानं धर्मार्थकाममोक्षणां सिद्ध्ये सद्वैव प्रयुञ्जते ते लौकिकानि दुःखानि विहाय परमार्थ सुखं प्राप्नुवन्ति ये जनाः सर्वव्यापिनं न्यायकारिणम् सर्वज्ञं सनातनं सर्वात्मानमन्तर्यामिनं सर्वप्रष्टारं परमात्मानं ज्ञात्वा सुखदुःख लाभहानिषु स्वात्मानमन्तर्यामिव सर्वद्रष्टारं परमात्मानं ज्ञात्वा सुखदुःख लाभहानिषु स्वात्मवत् सर्वान प्राणिनः विज्ञाय धार्मिका भवन्ति ते एव मोक्ष लभन्ते सत्यधर्म दर्शनार्थ स्वर्णमयमावरण परावृत्यैव सत्यान्वेषी भवितुमर्हिष तदा च मोक्षाय प्रभवसि। जीवात्मा स्वकीया ज्ञान कारणेन विषय लालेषु पतित्वाविद्यान्धकारे मोहमयीनिद्रायां स्वपिति कदाचित् तया निद्रया खण्डिते जाते स्वप्नवत् स्वयाय कर्मेभ्यो विभेति यो जीव तस्य परमेश्वरस्य शरणं प्राप्य तस्यैव सततं स्तुतिप्रार्थनोपासनां करोति स दयालुः पिता तस्य मोहमयीनिद्रां भित्वा स्वकीय स्वरूपं प्रति प्रेश्यति हे दयालो प्रभो भवत्कृपयाऽसंख्य जीवा मुक्तावस्थां प्राप्ता अस्मान् प्रत्ययि भवान प्रसीदतु चिरकालादस्या मोहमयीनिद्रायाः जागरित्वाऽस्मान् स्वस्वरूपस्य ज्ञान कारयतु पौनः पुन्येन च ज्ञान विज्ञाने गति क्रियताम् वैदिकसन्ध्यायां प्रातः सायं धर्मार्थकाममोक्षर्थम ईश्वस्य प्रार्थना कृताः।

## शुक्लयजुर्वेद दार्शनिकतत्वानि, मानव जीवनस्य चरमलक्ष्यम् –

समस्तदर्शन वेदोपनिषदामवगाहनं मानवं चरमत्वानुभूतये उत्कण्ठितं करोति। अन्वेषणस्य स्वतः प्रक्रिया मानव प्रेश्यति। अन्वेषणस्य सारप्राप्तुमिच्छति। आत्मनः ब्रह्मणश्च साक्षात्कारो मानवजीवनस्य चरम-

लक्ष्यमस्ति दार्शनिकान्वेषणं मानव जीवनस्यचान्तिमलक्ष्यमेकमेवास्ति आत्मनः परमात्मनः स्वरूपस्य ज्ञानम्। जगतः स्वरूपेण परिचयः कर्म ज्ञानमुपासनानुगमनम्। अन्ततः इदं सर्वं किमर्थम्। मानवं एतस्य सर्वस्यान्वेषणं कथमकरोति। एतेषां सर्वेषां चरमलक्ष्यं मानवस्य पूर्णसुख प्राप्त्यां सम्बन्धः। त्रिविधदुःखानां अत्यन्त निवृत्ति रेवात्यन्तपुरुषार्थः ब्रह्मज्ञानं प्राप्त साधकोऽमरो भवति तं सर्वव्यापकं परमात्मानं ज्ञात्वाऽत्मा मृत्युमतिक्रामति। अस्मादतिरिक्तः न कोऽपि पन्थाः अन्यः अतो मनुष्यस्य मुक्तावस्थैव तस्य सत्यावस्था इदं परमसुखं च मोक्षः कथ्यते मोक्ष प्राप्ति एव जीवनस्य चरम लक्ष्यम्।

**मोक्षप्राप्तेः अनिवार्यताः –**

महर्षिः याज्ञवल्क्यः स्वधर्म पत्नी मैत्रेयी आत्मज्ञानस्यानिवार्यता सम्बन्धेउपदिशति – हे मैत्रेयी निश्चयेनाऽऽत्मैव द्रष्टव्यः श्रोतव्यः मन्तव्यः अन्तकाले चानुभवितव्यः आत्मनः (परमात्मनः) दर्शनेन श्रवणेन मननेन विशेषज्ञान प्राप्त्या इदं सर्वं ज्ञानं प्राप्यते मैत्रैयाः इयमुक्ति मोक्ष प्राप्तौ सहायिकासेत्स्यति। येनाऽहं नामृतास्यां किमहं तेन कुर्यामयेनधनेनाऽहं नाम्रतास्यां तेन धनेनाहं किम् करिष्यामि। अतः हे भगवन् यानि मोक्ष साधनानि भवता ज्ञायन्ते तानि मामुपदिशतु भवान्।

**मोक्षविषये विभिन्नदार्शनिकविचारा –**

महर्षि पतञ्जलिः कथितवान् सर्वदुःखानाम भावात् परमतत्व दर्शनात् च कैवल्य प्राप्तिः त्रिविधदुःखेनभ्य (आध्यात्मिकाऽधिदैविकाऽधि-भौतिकानि) त्यन्तनिवृत्तिरत्यन्त-पुरुषार्थश्चैव मुक्ति मार्गः न्यायदर्शनेनापि

स्वीकृतम् दुःखेभ्योऽत्यन्तविमोक्ष एवाऽपवर्ग साधनम् ब्रह्मसूत्रानुसारेण धर्मा-धर्माः स्वकार्य सुखदुःखे सह त्रिषुकालेषु सम्बद्धा न भवन्ति। एषा शरीररहितस्थितिः मोक्ष उच्यते आत्मा ब्रह्मणि पूर्णतया विलीयते। रामानुजदर्शनानुसारेण जीव सर्वज्ञत्वं सत्संकल्पत्वं च प्राप्नोति परं स ईश्वर इव सर्वज्ञ सर्वकर्तृत्वगुणेन सम्पन्नो न भवति ब्रह्मज्ञः साक्षात् ब्रह्ममयोभवति एतां स्थिति प्राप्यस न प्रत्यावर्त्तते – इति मुण्डकोपनिषद् ऋषिणां मतम् आत्मनः ब्रह्मणः एकत्वमेव मोक्षत्वम्। यदा हृदये विद्यमाना समग्रभावाः नश्यन्ति तदा मनुष्योऽमरत्वं प्राप्नोति अत्र च स ब्रह्मत्वमाप्नोति। छान्दोग्योप-निषद् आत्मोपलब्धौ परमसुखं मन्यते स सर्वत्र विद्यते उपरिष्टादस्ति अधोऽस्ति अग्रतः पृष्टतः दक्षित उत्तरतोऽस्ति। परमतत्वस्य नाम भूमाऽस्ति। यस्यां स्थितौ आत्मानत्वपरं पश्यति न च शृणोति सा भूमैवामृतम् श्वेताश्वतरोपनिषदनुसारेण ब्रह्मज्ञानं प्राप्य साधका अमृता भवन्ति।

**शुक्लयजुर्वेदेमोक्षणम् –**

वेदेषु मोक्षसिद्धान्तस्य विकसितं दार्शनिकरूपं न दृश्यते ऋषिभिः देवानां कृतेषु दुःखेभ्यो बन्धनेभ्यो मुक्तेः भावेषु पुरुष प्रजायति विश्वकर्मा हिरण्यगर्भरूपे कृतासु परमतत्त्व कल्पनासु वयमस्य सिद्धान्तस्यमूलप्रवृत्तिं द्रष्टुशक्नुम्। यजुर्वेदे मृत्युबन्धनात् मुक्तिभावोऽपि दृश्यते। एकस्मिन् स्थाने मुमुक्षुमेगवन्तं प्रार्थयते – सुगन्धयुक्तं पुष्टिदायकं त्रिनेत्रवन्तं भगवन्तं वयं पूजयाम् अहं पक्वमुर्वारुकमिव मृत्युबन्धनात् मुक्तो भवेयम् नामृतात्। एकस्मिनये मन्त्रेऽपि प्रार्थना कृता हे मनुष्याः ! स परमात्माऽस्माकं भ्रात्रेव सुखदायकः

सकलजगदुत्पादकः सर्वकर्म पूर्णकर्ता सम्पूर्णलोकमात्रनाम–स्थान–जन्मनि यथावज्जानति। संसारिकसुखदुःखरहितंनित्यानन्दयुक्तं मोक्षस्वरूपं धारण-कर्तृपरमात्मा स्वस्य गुरुराचार्यो न्यायाधीशश्चास्ति स्वजना मिलित्वा सदैव तं भजेयुः। त सर्वव्यापकं परमात्मानं ज्ञात्वाऽऽत्मा मृत्युमतिक्रमति। अस्मादितिरिक्तो न कोऽप्यन्यो मार्गो मोक्षश्च। न केवलं यजुर्वेदेऽपितु अन्येषु वेदेष्वपि मुक्ति मोक्षो क शब्दः दृष्टिपथं नायति। केवलमेकस्मिन् मन्त्रेषुमुचधातोः एको लकारः प्रयुक्तः।

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्॥**

मुक्तेमोक्षस्य भाव इतो गृहीतो भवेत्। परं दार्शनिकैमुक्तिविषये या मीमांसा कृता साऽस्मात् मन्त्रात्र केनापि प्रकारेण न सम्बद्धा वेदेषु मुक्तिस्थाने परमपदं एतादृशाः वान्येशब्दा प्रयुक्ताः।

**तदविष्णोः परमं पदं सदा पश्यन्ति सूरयः।**
**अनेन ज्ञायते यद ब्रह्मणः परमपदप्राप्तिरेव मोक्षः॥**

एवं स्थितौ सुखस्य गौणकाम्यत्वं दुःखाभावस्य मुख्यकाम्यत्वं सिद्धम् अतः सुखार्थ दुःखाभाव भवतीति पूर्ववचनं विपरीतंभवेत दुःखा-भावस्यानुभव एव न भवति इति हेतो काम्य त्वमेव तस्य न भवति। तदपि न दुःखेन पीडित पुरुषदुःखाभावस्य प्रतीते ज्ञानं विनापि दुःखेन त्यागस्य इच्छां करोति इति लोके दृश्यते। यदि तस्य दुःखाभावानुभूते कामना भवेत

सकलजगदुत्पादकः सर्वकर्म पूर्णकर्ता सम्पूर्णलोकमात्रनाम–स्थान–जन्मनि यथावज्जानति। संसारिकसुखदुःखरहितंनित्यानन्दयुक्तं मोक्षस्वरूपं धारण-कर्तृपरमात्मा स्वस्य गुरुराचार्यो न्यायाधीशश्चास्ति स्वजना मिलित्वा सदैव तं भजेयुः। त सर्वव्यापकं परमात्मानं ज्ञात्वाऽऽत्मा मृत्युमतिक्रमति। अस्मादितिरिक्तो न कोऽप्यन्यो मार्गो मोक्षश्च। न केवलं यजुर्वेदेऽपितु अन्येषु वेदेष्वपि मुक्ति मोक्षो क शब्दः दृष्टिपथं नायति। केवलमेकस्मिन् मन्त्रेषुमुचधातोः एको लकारः प्रयुक्तः।

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्॥**

मुक्तेमोक्षस्य भाव इतो गृहीतो भवेत्। परं दार्शनिकैमुक्तिविषये या मीमांसा कृता साऽस्मात् मन्त्रात्र केनापि प्रकारेण न सम्बद्धा वेदेषु मुक्तिस्थाने परमपदं एतादृशाः वान्येशब्दा प्रयुक्ताः।

**तदविष्णोः परमं पदं सदा पश्यन्ति सूरयः।**
**अनेन ज्ञायते यद ब्रह्मणः परमपदप्राप्तिरेव मोक्षः॥**

एवं स्थितौ सुखस्य गौणकाम्यत्वं दुःखाभावस्य मुख्यकाम्यत्वं सिद्धम् अतः सुखार्थ दुःखाभाव भवतीति पूर्ववचनं विपरीतंभवेत दुःखा-भावस्यानुभव एव न भवति इति हेतो काम्य त्वमेव तस्य न भवति। तदपि न दुःखेन पीडित पुरुषदुःखाभावस्य प्रतीते ज्ञानं विनापि दुःखेन त्यागस्य इच्छां करोति इति लोके दृश्यते। यदि तस्य दुःखाभावानुभूते कामना भवेत

तदाविषादिभक्षणं कृत्या किमर्थ देहत्यागं करोति अनुभूत्यर्थ देहस्यावश्यकता वर्तते ।

तेन अभिव्यक्तेन अत्यन्तं विमुक्त सुखीभवति इति केचन मीमांसका: वदन्ति दुःखाभावः सुखस्य मध्ये व्याप्तिः वर्तते इति वक्तुं न शक्यते। व्याप्तेः असिद्धत्वात्। दुःखाभावः सुखेनः न व्याप्तः। सुषुप्तावस्थां दुःखाभाव सत्वेऽपि सुखं नास्त्येव। तदुपरि उच्यते यत दुःखाभावः सुखेन व्याप्तो मास्तु किन्तु सुखन्तु दुःखाभावेन व्याप्तं वर्तते । कथमिति चेत सुखे सति दुखाभावस्य अवश्यमेव वर्तमानत्वात्। अतः दुःखाभावार्थ सुखस्य प्रार्थना आवश्यकी ।

तदा तत्रविवेकस्य किं प्रयोजनम्। इण्यमाण तामात्रानुबन्धित्वात्। अर्थात् य अभीष्ट स एवं पुरुषार्थः यथा कामपुरुषार्थः गम्यागम्ययो विवेकस्य अपेक्षा न करोति विवेकपुरुषस्य अविवेकिपुरुषस्य मध्य अयमेव भेदो वर्तते यत् विवेकिजनाः शास्त्रानुकूलाचरणं कुर्वन्ति। अर्थात् दुःखानाशार्थ विषय-भक्षणादि कर्म अथ च कामशान्त्यर्थम् अगम्यागमनं नैव कुर्वन्ति अपि च दुःखाभावः यदि पुरुषार्थो न स्यात् अवेद्यत्वात्।

कष्टकनिवृत्यनत्यन्तरं प्रथमावस्थायां दुःखनिवृत्ति अनुभवः भवति तदातस्य पुरुषार्थत्वे न कोऽपि बाधः अनुभविकत्वं पुरुषार्थ उच्यते तदा आत्यन्तिक निवृत्तिरुपमोक्षेपि तुल्यत्वं वर्तते। अर्थात् शब्दानुमानाभ्यां मोक्ष कालिकदुःख निवृत्तिरपि आनुभविकि वर्तते यदि उच्यते तादृशनिवृत्तेः शाब्दबोधः अथ च अनुमितिः भवति चेदपि साक्षात्कारो न भवति। अतः मोक्षः पुरुषार्थो

नास्ति तदा दुरित क्षय कामस्य कर्मानुष्ठानानर्थक्य प्रसंग स्यात् पापा भावस्य अथ च पापस्य यत् फलं दुःखं तदभावस्यापि साक्षात्कारो न भवति।

यदि उच्यते प्रायश्चित्तजन्य दुःखनिवृत्तेः प्रत्यक्षेण अनुपलभ्य-मनोऽपि उपलब्धि योग्यतां पन्नानिष्ट निवृत्ति रूपत्वात् न दोषः अर्थात् पुरुषार्थ प्रति उपलब्धे योग्यता कारणम् तथा च तादृश्योग्यता प्रायश्चित्य जन्यदुःखाभावे वर्तते। तत्प्रतियोगि दुःखमपि उपलब्धियोग्यं वर्तते तदा एतादृशोपलब्धियोग्यतां मोक्षेपि तुल्या एव।

दुःखवतसुखस्याप्युच्छेदाद् दुःखनिवृत्तरूपमोक्षः अकाम्यो भवति। तदा एवं नैवं वक्तुं शक्यते। यथा अतितृष्णया अगम्यागमनादिषु दोषस्य उपेक्षां कृत्वा तत्र अविवेकिनां प्रवृत्तिर्भवति तथैव सुःखसाधनेषु विवेकिपुरुषाणां अनपेक्षाबुद्धित्वात् तेषां गुणानांतिरस्कारेण सुखसाधनेनि-वृत्तिरपि दृश्यते। यथामधु विषसंयुक्तमन्नम्। सन्ति च केचनालं प्रत्यवन्तः दुःखसुखयोमध्ये सादृश्यं नास्ति। दुःखस्यैव आधिक्यात्। तथा च दुःखानां निवृत्ते आधिक्य दुःखस्य उच्छेदरूपहानिः स्वल्पा वर्तते अतएव दुःखनिवृत्तिः अवश्यमेव काम्या वर्ततेः। दुःखे सुखहेत्व ननुवगेऽपि सुखे दुःख हेत्व नुषगंनियमात्। यथा न्यायोपार्जित विषयेषु किमतीसुखद्योतिका भासेत अथ च अर्जने रक्षायां च कियति दुख दुर्दिनानि दृश्यन्ते। अर्थात् न्यायो पार्जित विषयेष्वपि दुःखस्यैव आधिक्यं दृश्यते अन्यान्योपार्जितेषु यद भविष्यति तन्मनसापि कल्पयितुं न शक्यते। दुःखात्यन्ताभावस्य मुक्तित्वपक्षे अत्यन्ताभावस्य नित्यत्वात् तस्य उत्पत्तिनैव भवितुमर्हति। तथापि दुःख-

साधनानां ध्वंसः उत्पद्यमान एव। अतः तेन दुःखाभावस्य सम्बन्धोऽपि उत्पाद्यः। उत्पाद्यत्वात् दुःखात्यन्ताभावस्यापि साध्यकोटौ प्रवेशः। यदि आत्यन्तिक दुःख ध्वंसो मुक्तिः सतु स्वतः साध्यएव दुःखप्रागभावमुक्ति यदि भवेत् सोऽपि दुःखानां यत् कारणं तेषानाशे सति साध्यएव।

नित्य सुख न सत्यम्। अतः नित्यं सुखमोक्षः इति वक्तुं न शक्यते योग्यानुपलम्भवाधित्वात्। नित्य सुखस्याततदा तस्य प्रत्यक्षमपि स्यात् नित्यसुखस्य प्रत्यक्षयोग्यता सत्त्वेऽपि तस्य अनुपलब्धमानत्वात् नित्यं सुखं नास्येव इति चेन्ननित्यसुखस्य सत्वे श्रुति प्रमाणं वर्तते। तदपि वक्तुं न शक्यते। कथमिति चेत् योग्यो भूत्वापि अनुपलब्धमानत्वात् बाधितः वर्तते अतः तस्य बोधिका श्रुति कथं भवेत्।

**नित्यं विज्ञानामानन्दं ब्रह्म –**

इति श्रुतिः मोक्षावस्थायं नित्यसुखस्य उद्बोधनं न करोति किन्तु दुःखात्यन्ताभावस्य नित्यसुखस्य काम्यत्वमपि नास्ति। सुखास्य नित्यत्वात् सर्वदा वर्तमानत्वेन पुनः काम्यत्वं कथम्? लोके इदमेव दृश्यते यतवस्तु कस्यचिद् नास्ति तस्यैव कामनां स करोति। इदं न दृश्यते यत यद वस्तु यस्य समीपे वर्तते स तस्य प्राप्त्यर्थं कामनां करोति तदुपरि उच्यते नित्यसुखस्य विद्यमानत्वेऽपि भ्रान्त्या तस्य कामना भवति इदमपि वक्तुं न शक्यते सुखस्य स्वयं प्रकाशमानत्वात् तस्य भ्रमः नैव भवितुमर्हति अतः नित्यसुखस्य काम्यत्वं नास्त्येव।

नापि नित्यसुखस्य शक्यत्वम्। अर्थात् नित्यसुखात्मकमोक्षः न

साध्यो भवितुमर्हति। शक्यार्थस्तु विकायम् संस्कार्यम् प्राप्यम ज्ञेयम् उत्पाद्यम् नित्यसुखात्मकमोक्ष नापिविकार्यः अपरिणामित्वात् नापि संस्कार्यः अनाधेयातिशयत्वात्। नापि प्राप्यः नित्यसम्बन्धवत्वात्। नापि ज्ञेयः ज्ञानस्यापि नित्यत्वात् नापि उत्पाद्य उत्पत्तौ चेत अकारणत्वप्रसंगात। नित्यसुखस्य मोक्षत्वादिनां वेदान्तिनाम् मतेज्ञानस्यापि नित्यत्वं वर्तते। अतः ज्ञानस्य सुखस्य च नित्यत्वात् उपासनादिविधनां नित्यसुखस्य ज्ञेयत्व कथनम् सगतमेव।

यदि ज्ञानमनित्यमिति उच्यते तदामोक्ष दशायां शरीरादीनां ज्ञान साधनाभावात् नित्यसुखस्य ज्ञानमेव नैव भवितुमर्हति। यदि शरीरादि-कारणाभावे सुखज्ञानस्योत्पत्तिः स्वीक्रियते तदा शरीरेन्द्रियं विना ज्ञानोत्पादः स्यात्। अस्यां स्थितौ सर्वेषां सर्वज्ञात्वापत्तिः स्यात् कथमिति चेत ज्ञानस्य कारणं आत्मनः संयोग सः सर्वेषा समान एव वर्तते।

ज्ञानज्ञेयो नित्यत्वेऽपि तस्य सम्बन्धः उत्पद्यते अतः उपासनादि विधिना साध्य एव वर्तते सम्बन्ध उत्पत्तिभाव द्रव्यादि षट् पदार्थव्यतिरेक-मानात् उत्पन्नोपि निवर्त्यते ध्वंसादिवत्।

तदपि नैव भवितुमर्हति। भावाभावयोः प्रकारान्तरा भावात् सम्बन्धः अभावरूपो न निष्प्रतियोगिकाभाव् नैव भवति। यदि भावरूपं स्यात् तदा उत्पन्ने सति विन्नष्टः स्यात्। उत्पन्नवस्तुनाशे भावत्वमुपाधि यदि उच्यते यत् अविद्यायाः ध्वसं एवनित्यज्ञान नित्यसुखयोः सम्बन्धः तदाइष्टापत्तिः एकविशंति दुःखेषु अविद्यायाः सत्वात् एकविंशतिदुःखध्वसः एव मोक्ष इति न्यायमतं वर्तते। अतः एवमेव निष्कर्षो जातः यत एकविंशति दुःख ध्वसं पुरुषार्थः मोक्ष इति।

**मोक्षत्वम् –**

पूर्वस्मिन् आत्मतत्व प्रकरणे आत्मानात्मनः विवेचनं जगदधिष्ठाता एव एवात्मा स एव चराचरस्य जीवस्वरूपं इत्यादयो विषय सम्यक् प्रतिपादिताः इदानीं तस्यात्मनः मोक्षस्वरूपं प्रतिपाद्यते। तथा हि कामस्य कर्मणः च सृष्टिकारणत्वात् तस्मिनरोधादेव संसारमोक्षो नाम आत्मा साक्षात्कारो भवतीति प्रतिपादयति देववाणी।

**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।**
**सतौ बन्धुमसति निरविन्दन् हृदि प्रतीच्या कवयोमनीषां।।**[१]

दशममण्डलस्य शतोत्तर एकोनत्रिंशतमे सूक्ते चतुर्थोऽयं भवति मन्त्रः। तैत्तिरीय ब्राह्मणे २-४-१-१० इत्यत्र तैत्तिरायारण्यके १-२३-१ इत्यत्र च प्रतिपादितः। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः सिसृक्षा तस्येच्छा, समवर्तत सम्यजायत् इति ईश्वरस्य सिसृक्षा किं हेतुका। जाह मनस इति मनसः अन्तःकरणस्य अधिसंबन्धि वासनाशेषेण मायायां विलोनेऽन्तः करणे समवेतं सामान्यापेक्षमेकवचनम् एतेनात्मनः गुणात्रयत्वं प्रत्याख्यतं भवति तादृशं रेत भवतिः प्रपंचस्य बीजभूतं प्रथम अतीते कल्पे प्राणिभिः कृतं पापपुण्यादिकं शुभा शुभं कर्म यत यतः कारणात् सृष्टिसमये आसीतअभवत् तत तस्माद्धेतोः फलप्रदस्य सर्वसाक्षिणः परमेश्वरस्य मनसि कामरूपां सिसृक्षा अजायत्। जातायां तस्मा सृष्टष्यं पर्यालोच्य ततः सर्व जगत्सृजति एवमाम्नायते श्रुतौ —

१. ऋ०सं० १०-१२९-४. इति।

**सोऽकामयत् बहुस्यां प्रजाययेति स तपोतप्यत् ।**
**सतपस्त्फत्वा, इदं सर्वममसृजत, यदि द किंच ।।** [१]

इति सतः सतवेनेदानीं प्रतीयमानस्य सर्वस्य जगतबन्धुं बन्धक हेतुभूत कल्पान्तरे प्राण्यनुठितं कर्मसमूहं कवयः कान्त दर्शितः अतीतानागतवर्तमानाभिज्ञाः योगिनः हृदि-हृदये निरुद्धयामनीषा मनीषया बुध्यया सुपां सुलुक इति तृतीयात्लुक प्रतीत्या-विचार्य अन्वेषामपि इति सां प्रतिको दीर्घ। असति सद्विलक्षणे कारणरूपे व्यावृते निरविन्दन विविच्य अजाननं इति। अत्राय भावः एतेन जगतः पुनरुत्पत्तौ ईश्वरस्य पर्यालोचनात्मकं तप कारणम् तस्य कारणं सिसृक्षात्मकः कामः तस्य कारणम् कल्पान्तरानुष्ठित प्राणिसमुदायः तथा च तयो कामकर्मणोरज्ञान मूलयोः तदवज्ञानेना ज्ञान-संसारद्वारा प्रतिसंहारे सत्यमेव मोक्षोः सम्मतः इति। तथा च कर्तृत्व कर्मत्वादिकमेव संसारस्यमूलं भवति अस्य कर्म कर्तृत्वादेः विच्छेद एव मोक्ष इति।

एवमुमुक्षूणां मन्दप्रजानां चितशुद्धौ उपास्यत्वेन सविशेषज्ञाने निर्विशेष ज्ञाने चोपायमूतान विभूति विशेषान् संक्षेपतः प्रतिपादयतीयं वेद वाणी।

**ब्रसा देवानां पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम् ।**
**श्येनो गृध्राणां स्वधितिर्वनानां सोमः प्रवित्रमत्येति रेमन् ।।** [२]

---

१. तै०उप० २-६.
२. ऋ०सं० ९-९६-६.

इति अयं मन्त्रः नव मण्डलस्य षष्ठवर्तितमे सूक्ते षष्ठो भवति। सामवेदऽपि (१४४) इत्यत्र तैत्तिरीयसंहितायां ३-४-११-१ इत्यत्र तैत्तिरीयारण्यके १०-१०-१ इत्यत्रनिरुक्ते १४-१३ इत्यत्र च जाम्नातः। मन्त्रार्थः सोमः उमया महामयया सह वर्तमानो महेश्वरः सविशेषः परमात्मा देवानां अग्नीन्द्रादीनां मध्य ब्रह्मा सरस्वती सहचरः सर्वदेवनियन्तृत्वशक्ति विशिष्टः चर्तुमुखः ब्रह्मा सः सर्वस्य लोकस्य शिक्षकत्वेन अवस्थितः। श्रूयते श्रुतिः।

"ब्रह्मा देवानां स ब्रह्मविधाम् सर्वविद्याप्रतिष्ठाम्।
यर्वाय प्राह ................................ प्राह।।"[1]

अनेन ब्रह्मण ब्रह्मविद्यासंप्रदाय प्रवर्तकत्व माम्नायत इति। एवं कवीनां क्रान्तप्रज्ञानां पुरुषघोरेयाणां मध्ये पदवीः पदवाक्यादि सामधर्याभिज्ञः व्यासादिरूपेणा वस्थितः आसीत्। पदव्याः व्युत्पत्तिस्तु एवं भवति पदं व्याकरणादौ निष्पन्नः साधुं शब्द विशेषाः तद्वेति जानाति व्रिपाणां वैदिकधर्म पथ पधिकानां ब्राह्मणानां मध्ये स परमात्मा ऋषिः वसिष्ठविश्वामित्र पराशरादिरूपेण अवस्थितोऽभूत्। तथा चोक्तं यास्केन — 'ऋषि दर्शनात्'[2]।

इति मृगाणां चतुष्पदां पशूनां मध्ये महिषः बलाधिवयेन युक्तः प्राणिरूपेण स्थितोऽभूतगृघ्राणां ग्रध्रोफलक्षितानापक्षिणां सर्वेषा मध्य श्येनः शशनीय पक्षिराजा गरुडः आसीत्। एवं वनानां तरुगुल्मलतादि समूह रूपाणां

---

१. मुण्डक १-१.
२. नि० २-१-११.

विस्तृतानां मध्ये तच्छेदन शक्ति सम्पन्नः स्वधिति परशुरभवत्। तथा च प्रतिपादिताः सर्वेप्येते सादृश्यत्वेन तस्य ब्रह्मणः अखिलविभूति प्रदर्शपराः भवन्तीति वेदितव्याः। एवं सकल विभूतिरूपा परमेश्वरः रेमन शब्दाययानः तत्व्दिमूर्ति शब्देरवगम्यमानः सर्वप्येतेसादृश्यमूखेन तस्य ब्रह्मणः अखिल विभूति प्रदर्शपरा भवन्तीति वेदितव्याः एवं सकल विभूतिरूपः परमेश्वरः रेमन शब्दायमानः ततविभूति शवदरेवगम्यमानः सन पवित्र परमपावनः इति सामान्येन न पुषकं पुलित्वेन विपरिणेयम्। सः अत्येति सर्वान् शसितरापान् विभूति विशेष स्वरूपानतिक्रम्यनिरतिशश्यस्वरूपेण सर्वोपरि वर्तते इति। तस्मात् मोक्षदाता मुक्तिस्वरूपश्चस एव भवति अतः तस्य ज्ञानेनेव आत्मसाक्षात्कारूपो मोक्षः सिद्ध्यतीति।

मुक्तेः कारणभूतस्यनिराकारस्य परमात्मनः। उपासनं कर्तु न भवति अतः तस्यस्वरूपज्ञानाय प्रथमतः साकारेणेव तस्योपासना करणीया। परमार्थतस्तु तस्यनिराकारत्वेन निर्विषयत्वेन च आलम्बना न सिद्ध्यति तथा च श्रुतिः।

**'तदेव ब्रह्म त्वंविद्धिनेदंपदिदमुपासते।'[१]**

इति सत्येवं विमालम्बना परमेश्वरोपासना कार्या? इति चेत् उच्यते। शुद्धसत् वमयीमायोय स्थान प्रत्युयवस्थापितेः विग्रहेः समुपेतः पुरुरूपः ईश्वरः उपासने बलम्बनीय इति वेद वाणी उपदिशति।

---

१. केन० १-५.

**स्थिरेमिरगं पुरुरूपं उग्रो वभुः शक्रेमिः पिविशेहिरण्येः ।**
**ईशानादस्य भुवनस्य मूरेर्न वा उपोषदद्रावसुयम् ।।**[१]

इति मन्त्रोऽयं द्वितीये मण्डले त्रयत्रिशतमे सूक्ते नवमो भवति।

मन्त्रार्थः – स्थिरेपिः दृढे अवयव संयुक्तः पुरुरूपः बहुभिः रूपरूपेतः उग्रः, उदगुर्ण इति तेजस्वी सर्वसमर्थ वभुः मर्ता रूद्ररूपः परमेश्वरः शुक्रेभिः दीप्तैः तत्वमयी मायाप्रत्युपस्थापितेः हिरण्येः हिरण्यवत् हितरमणीयः साकारविग्रहः विपिशे दीप्यते। अनेन पूर्वार्धेनसाकार विग्रहोपेतस्य सगुणस्य तस्यपरमेश्वरस्य उपासना सूचिता भवति दर्शानात् ईश्वरति अस्य भुवनस्य समस्तभूत जातस्य मूरेः मर्तुः विचारकत्वात् रूद्राते – परमेश्वरात् असुर्य-ज्ञानादिवलं असुरं इति पदं क्षेप्ता इत्यत्र साधु भवति सदवावयादि क्षेप्तृणु विद्धत्सु उपलभ्यमानं वलभसूर्यमित्युच्यते। तज्ज्ञानवलमिति तत नवा उन्नव-योषत पृथक् भवति। पिश अवयेव इत्यत्रः दीपनायां विपिशे इति कर्मणिलिट् अप्सुक्षेपणे इति असेरुरन अतः असूर्य इति योषत्।

'यूमित्रणामित्रणयोः' इति योते लेहि अडानमः सिववहुलं लेटि इति सिय भवति। तथा चानेन मन्त्रेण साकारोपास नामार्गेण क्रममुक्तिः आम्नातभवतीति।

मुमुक्षणां मुक्तिसाधनं वेदस्य सदुपदेश एव भवति। सन्तिभूपांसि भगवतो वेदस्यानाद्य वच्छिन्नकाल प्रवृतानि सदुपदेशरूपाणि वचांसि यथा

---

१. क०सं० २-३३-९.

वद वगम्यमानानि एतानि वचांसि नास्तिकानामपि श्रोत्राणि नास्ति वपलक्षणं वाधिर्य विचूर्णयन्ति एवमेतेभ्य वचोभ्यः सप्राप्तेन सद्विज्ञानरूपप्लवेन अतिदुस्तरं संसाराणर्व पर्वतनाः बहवो महाभागाः समतारिणुः इदानीन्तना पुण्य जनाः सन्तरन्ति माविनोऽपि सन्तरिष्यन्ति। अतः अयं सद्विज्ञानप्लवः शाश्वतः ज्ञानं सत्यं भवति सर्वैरपि स्वस्वमोक्षाय ब्रह्मणः ज्ञाने विगतरागादि कल्मष चितता सिद्धये सदा प्रयत्नः विद्यातव्य इति वेदवाणी बोधयति।

**ऋतस्य हि शुरुषः सन्ति पूर्वाः ऋतस्य धीतिर्वजिनानिहन्ति।**

**ऋतस्य हि श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आपो।।** [1]

इति दशममण्डलस्य त्रयोविशंति तमे सूक्ते भवत्यर्थ मन्त्र अष्टम इति मन्त्रार्थः। ऋतस्य – त्रिकालाबाध्यस्य सत्यस्य परमात्मनः प्रतिपादकानि शुरुथः श्रोतृणां शोकनिवनरकाणि महमहिम शालीनिवचानि, शुक्रमिति शोकं सरुन्धन्ति इति निर्वचनात् पूर्वीः अनादियपरा प्राप्तकानि मुपासि सन्ति हि विद्यन्ते खलु एवं ऋतस्य परमात्मनः धीतिधार्यमाणा प्रज्ञाविज्ञानं वृजिनानि वर्जनीयानि अविद्यादिक्लेश लक्षणानि हन्ति नाशयति तथा तस्य ऋतस्य श्लोकः – पशयः यदि वुधानः बुध्यमानः तपसा सावधानेन यथावद व गम्यमानः स्यात्। तथा च श्रुतिः।

तपसा ब्रह्मविजिज्ञास्य (तै०उ० ३-२) इति एवंरूपः स शुचमानः दीप्यमानः ध्यान निष्ठया अन्तहृदये सततं प्रकाशमानः सन्

---

१. क०सं० ४-२३-८.

परमार्थरूपां मुक्ति साधयतीति। तस्यैव लोकदृष्टम् फलमव्याह स च तत वदन्तिः स काशात् श्रूयमाणाः यश आयोः सत्य विमुखस्य वहिगर्मन शीलस्य नास्किमन जनस्य वधिरा – वाधरौ कथं वर्तमानो? नास्ति वय निचिकित्सादि दोषेण प्रतिवद्धो कर्णा-कर्णो ततदं तर्दति नास्ति वयं संशयादि लक्षणं वाधियं हत्वा तस्य हृदयान्त प्रविशति। ज्ञानरूपं वेदार्थबोधः नास्ति कथमपि अस्तिकं मूढ़मपि प्राज्ञं वर्हिमुखं अन्तमुखं करोतीति यावत्। एवमस्ति वेदस्य प्रभावः। अत सर्वेऽपि स्वात्मसाक्षात्कारेण संसारमुक्तस्यै अवश्यं वेद ज्ञाने श्रद्धेया भवेयुरिति। एवं मुक्तिस्वरूपं ज्ञानफलं प्राप्तुं कुतकार्दयः दूरतः प्रक्षेपणीयाः भवन्ति यद्यपि भूयांसो जना श्रुत्यादि शास्त्राण्यथीयन्ते शास्त्ररसमास्वादयन्ति च। छात्रा वहवः तानि शास्त्रवाक्यानि शृष्यन्ति अन्येषां त्रावयन्ति च तथाऽपि चेतसः पराकप्रवणतया कुतर्कग्रस्त तया च श्रुतीनां प्रधानार्थमूतं ब्रह्मतत्वं साक्षात्कर्तु न पारयन्ति। यः अनेक जन्मार्नित सुकृत वासन्या आसादि चित शुद्धि सन कुतर्का दिभ्य विमुखे भवति स एवं श्रुत्पाचार्योपदिष्टं सम्यगर्थ तत् ज्ञातु शक्नोति इति प्रतिपादयितुं प्रवृतेयं वेदवाणी।

**उत त्व पश्यन्नः ददर्श वाचमुतत्वं शष्वन्न शृणोत्येनाम्।**
**उतो त्वस्मे तन्वं विससे जायेत पत्य उशती-सुवासाः ।।**[१]

इति दशममण्डलस्य एकसप्ततितमे सूक्ते चतुर्थो भवति मन्त्रार्थः

१. क०सं० १-७१-४.

अत्र उत इति शब्दः अप्यर्थवा एवं त्वशब्दः एकार्थक उतत्व अप्यकः कश्चित परोकप्रवणः असंस्कृतः अनधिकारीति। वाचं श्रुत्या चार्थोपदिष्टां वाचं लिविरुपेण पश्यन्ति कुतर्ककामामुपहतेन मनस पर्यालोचन्नापि न ददर्श अपरोक्षता तदर्थ न पश्यति स्वात्यत्वेन नानुभवति ऐकाग्रया भावात् एवं उतत्वं अप्येकः एनां वाचं स्वरूपेण शण्वन्नापि न शृणोति दर्शनं श्रवण-फलाभावातदर्शने श्रवणे च अदर्शनात्व श्रवणत्वं चोपचयेति इति। तथाहि न्याय निष्फलं कार्य कृतमप्यकृतं भवतीति एवमर्थत्वेन अधिकार संपद्धि धुरः बर्हिमुखः अज्ञः निन्दितः। तृतीयपादेन अधिकार सपत्ययुक्तं विशंसफल-कार्यत्वेन स्तीति। उतोत्वस्मे अपि निश्चपेन एकस्मै साधनसंपतिमते तन्वं तनुमिति अर्थरूपं शरीरं विससेविस्तारं कृत्वा प्रकाशयति अर्थोहि वाचं शरीरं अर्थस्य हि सम्यक् प्रकाशनमिति। सृधातोः छन्दसि लुङ् लडलिट (पा०सू० ३-४-६) इति सूत्रेण वर्तमाने लिट्रूपम् ददशेत्यत्रापि एवमेव च बोध्यम चतुर्थपादेन सादृशरूप दृष्टान्तेन तमेवाधानुमवंश स्तुवन्नाह जायेत इति यथा जाया उशतीसंयोग कामयमाना सुवासा शोभनवस्त्र युक्ताजाया-गर्भग्रहणादि धारणादियोग्या पत्नी पत्ये स्वमंते ऋतुकाले संभोगार्थ प्रेम्णा स्वीयं सकलस्व रूपं दर्शयति तथा सा वाक उत्तमाधिकारयुजे स्वात्मानार्थ विवृणोति। स एव चेतसः शुध्येकाम्य काले नामर्थ स्वरूपां वाचं यथावत्य पश्यति शृणोति च नान्य इति। तस्मात् वागर्थ प्रतिपतेय श्रेयस्यकामैः मुमुक्षुभिः, महता प्रयत्नेन अधिकारसमत संपादनीयां, इयमेव मुक्ति प्रयोजिका भवतीत्युक्तं भवति।

मोक्ष एव ज्ञानस्य फलं भवति ततुफलंनिर्विधत्वेन संपादयितु प्रथमतः गणपति प्रार्थनां करणीया भवति अकरणे सति अविधकं सर्व न पश्यति तेन ब्रह्मणः कुतत्रवणमननदिध्यासस्सनेपि आत्मा साक्षात्कारो न भवति। अत्र एवोच्यते।

**अभिप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।**

**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ।।**

इति अन्यश्च —

**अर्चितः संस्मृतौ ध्यातः कार्तितः कथितः स्मृता ।**

**यो ददात्यमृतत्वं हि सने नः पातु गणाधिपः ।।**

इत्यादि स्मार्तवचनेन प्रसिद्धमहिम्नस्तस्य देवस्य सान्निर्ध्य सर्वेषाकार्याणां साकस्याय भवतिइत्याह वेदवाणी।

**जीवनस्योत्क्रमणम् –**

कोनतिर्विकासो वा न दुःख नाशो न च सुख प्राप्तिः अपितु परमं साम्यम् अर्थात् समन्वितं विकास परेषामुन्नतये तत्परः तस्य स्वोन्नतिरपि भवति स च सुखं लभते। अतः परेषामुन्नतये तत्परता निष्कामकर्म करणचैव मोक्षसाधनम्। मनुष्यः कर्म कुर्वन शतवर्षाणि जिग्वीषे त एवं स कर्मणि न लेप्स्यते। परोपकारस्य कर्मबन्धनं नास्ति स्वार्थस्यैव कर्म बन्धनम्। अतः निष्काम कर्मेव मोक्षसाधनम् न निष्क्रियत्वमक्रियाहीनः पुरुषः सर्वथाक्रियाहीनस्तु न भवितु यतकर्मत्वं तस्य स्वभाविकोगुणः परं स कर्मबन्धनेषु पतति स्वार्थः

तं पीडयति तस्योन्नतिरवरूध्येत स च दुःखमनुभवति। निष्कामकर्म मनुष्यमीश्वर सदृशं करोति। यो मनुष्यः यावान परोपकारी निःस्वार्थश्चास्ति तावान् एव मुक्ति समीपस्थः सदाचारी च। यदाभोक्तृत्वं ज्ञातृत्वं च पराकाष्ठां गच्छति तदा स जीवः मुक्तो भवति। एतदेव तस्य परं पदम्। एवत पदं प्राप्ते सति एवादभुतज्ञानाद भुतानन्दादभुतकर्म परायणता प्राप्यते। कार्यकारणं न व्यर्थम्। मनुष्याः कार्यकारणयो गुण स्वभावात् ज्ञात्वाऽऽधर्मात मोक्ष पर्यन्तं साधनेषु तान प्रयुज्यः, स्वात्मसम्बन्धिनां कार्य कारणयो विज्ञानेनाऽऽत्मनो नित्यत्व-ज्ञानेन मरणभयं त्यक्त्वा मोक्षं सिद्धयन्तु। इत्थं कार्यकारणाभ्यामन्यदेव फलं प्राप्तव्यम्। परमेश्वरस्य स्थानेऽनयोर्निषेधः उपासना प्रकरणे ज्ञातव्यं जीवात्मनः उभे गति स्तः एका मातृपित्रोः जन्मगृहीत्वा संसारेविषय सुखसेवनञ्च। अभ्यां सहैव सर्वे प्राणिनो विचरन्ति ये मनुष्याः ईश्वरेणाऽऽज्ञप्तानि सत्यभाषणादि व्रतानि धारयन्ति तेऽनुपम् श्रद्धां प्राप्य धर्मार्थ कामोक्षान सेद्धुं प्रभवन्ति।



# अष्टमोऽध्यायः

## तत्त्वमसिमहावाक्यार्थविचारः

जीवब्रह्मयोरैक्य प्रतिपादनावसरे महावाक्यानां विवेचनमत्यावश्यकमस्ति अद्वैतवेदान्त महावाक्यानामतिमहत्वपूर्णमस्थानमस्ति । इतानि महावाक्यानि जीवब्रह्मयोरेक्य प्रतिपादनं कुर्वन्ति । संक्षेपशारीरिके उल्लिखितमस्ति —

**"विना महावाक्यतो न कश्चितपुमांसमद्वैतवैतिजन्तुः ।"[१]**

विवेक चूड़ामणिग्रन्थेऽपि आचार्यः महावाक्यनामुपयोगिता इत्थं प्रकारेण प्रतिपादयति —

**ततस्तु तौ लक्षणयासुलक्ष्यौ तयोखण्डैकरसत्वसिद्धये ।**
**महावाक्यशतेन कथ्यते ब्रह्मात्मनोरैक्यमखण्डभावः ।।[२]**

विद्यारण्यानुसारेण महावाक्यानां संस्थाः चतस्ः वेद्यूते एतानि चत्वारिनिम्नमहावाक्यानि सन्ति ।

---

१. संंशा० ।
२. वि०चू०म० श्लोक० २४९-२५१.

प्रज्ञानं ब्रह्म

अहं ब्रह्मास्मि

तत्त्वमसि[१]

अयमात्मा ब्रह्म[२]

एतानि महावाक्यानि चतुर्भिः वेदैः संगृहीतानि सन्ति कतिपय विद्वांसः महावाक्यानां संख्या द्वादश मन्यन्ते किन्तु एतानि एकादशसंख्याकानि उपलब्धानि सन्ति।

तत्त्वमसि[३]

सर्वं खल्विदं ब्रह्म[४]

एकमेवाद्वितीयम्[५]

अहं ब्रह्मास्मि[६]

एष स अन्तर्याम्यमृतः[७]

विज्ञानमानन्दं ब्रह्म[८]

अयमात्मा ब्रह्म[९]

---

१. छा०उप०, ६/८/७.
२. मा०उप०, २.
३. छा०उप०, ६८/७.
४. तदेव, ३/१४/१.
५. तदेव, ६/२/१.
६. बृ०उप०, १/४/१०.
७. बृ०उप० ३/७/२३.
८. तदेव, ३/९/२०.
९. मा०उप०, २.

सत्यं ज्ञानमनन्तं ब्रह्म[१]

स यश्चायं पुरुषे यश्चसावादित्ये स एकः ।[२]

प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म[३]

स एवमेव पुरुषो ब्रह्म ।

अत्र महावाक्यविषये पदोच्चयो वाक्यमिति लक्षणं न घटते। यतो व्यापकार्थकं महावाक्यान्तरं नास्ति इति लक्षणमिह महावाक्यामन्वेति किं वा यन्महावाक्यार्थ श्रवणानन्तरं वचनान्तरापेक्षा न भवति। ये बहिर्मुखा इन्द्रिया रामा रात्रिदिवं लौकिकव्यावहारेषु समर्पितचित्तस्तेयामग्रे यदि काश्चिन्- महावाक्यं बूयात्तद्विषये न किञ्चिद बूमः। इह तु तेषां महामुनीना विषय एव संकेतः, येषा हृदयस्थज्ञानाग्निा पदार्थानां स्वाधीनसत्ता सर्वथा भस्मसात्- कृता। ये निर्जनप्रदेशस्या जीवब्रह्मैकत्व प्रतिपादनपराः स्वात्मनि प्रयोगयन्तो महावाक्यानि सार्थकानि कुर्वाणाः समुच्चारयन्ति। तेषां महापुरुषाणां हृदय- पटले सततप्रवहणशीलो ध्वनिः प्रादुर्भवति। स शब्दान्तरैनं पराभूयते। इदं प्रकरणभागमप्रधाम् — १. प्रज्ञानं ब्रह्म, २. अहं ब्रह्मास्मि, ३. अयमात्मा ब्रह्म, ४. तत्त्वमस्मि अध्येयम्। इमानि वाक्यानि यावद् उपनिषदां भागा न तावद् वाक्यानि। यदेमानि कस्यचन तत्त्वदर्शिन आचार्यस्य मुखच्छिष्यमनु- ग्रहीतुं निःसरन्ति तदा वाक्यसंज्ञां लभन्ते। वाक्येन समं वक्तुरनुग्रहभावनाया

---

१. तै०उप०, २/१.
२. तदेव, २/८/१.
३. ऐत०उप०, ५/३.

अपेक्षा भवति। आत्मासच्चिदानन्दस्वरूप इति ज्ञानं यद्यपि युक्त्या भवति परमात्मब्रह्मतत्वयोरेकत्व ज्ञानोपायश्शब्दप्रमाणमन्तरा नास्ति।

## प्रज्ञानं ब्रह्म

सांसारिकाश्चक्षुश्श्छोत्रादिभिरूपहितचैतन्येन ज्ञानेन वा पदार्थान् पश्यन्ति शब्दांश्च शृण्वन्ति। नासिकामाध्यमेन नि:सृतया वृत्या उपहितचैतन्येन सुगन्धान् दुर्गन्धाश्च जिघ्रांति। सर्वेशब्दावाग्रन्द्रियावृत्तेन चैतन्येनैव प्रोच्यते। एवं पदार्थेषु विधमानस्य रसस्य ज्ञानाय पदार्थमननाथ वा वृतिभि: समं यच्चै तन्यमपेक्ष्यते तदेव चैतन्य प्रज्ञाननाम्नाभिधीयते। एतदेव प्रज्ञानं ब्रह्मेन्द्रदेवमनुष्यपक्षि कीटपतङ्गादिषु सर्वत्र व्याप्तम्। एतस्यादेशे नैव स्वसथानस्थिता: प्राणिनो यथासमयं कार्य कुर्वन्ति। वेदादय: सर्वे ग्रन्था अस्मैव प्रज्ञानसूर्यस्य प्रकीर्णकिरणापिता:, एवदाश्रया जगतो जन्मस्थितिलया:। अत: सर्वान्तरावासं विभुप्रज्ञानमेव ब्रह्मतत्त्वम्। अतो मुमुक्षरहं मपि यत् प्रज्ञान प्रतीयते, यद ब्रह्मतत्त्वमेवेति कथने न संशये। व्यापके महामहिमशालिनि प्रज्ञाने क्षुद्राहङ्कारं सर्वथा परिहरामि। यदि ज्ञाततत्त्वोऽपि ब्रह्मभिधानं प्रज्ञानं क्षुद्राहङ्कारेण परिच्छिन्नद्भि: तदाहं पातकी स्याम्।

## अहं ब्रह्मास्मि

परमात्मतत्त्वं सिद्धान्तरूपेण सर्वेषु विद्यमानं क्षेत्रज्ञाम्ना प्रसिद्धं सर्वासां बुद्धीनाञ्च साक्षिभूतश्चास्ति। सर्वोऽपि परापेक्षया स्वमहान्तं मन्यमान: 'अहं ब्रह्मास्मि' इति रहति, परं नैतावता सर्वस्य कश्चिदुपकारो भवति।

अस्मात् सिद्धान्तात् तदैव लाभौ भवति, यदा कश्चित् साधक उक्तसिद्धान्तं प्रति दत्तध्यानः परिपूर्णं परमात्मतत्त्वं स्वबुद्धि साक्षिरूपेण भावयति स्वरूपा-वरणरूपमविघापटञ्चापाकरोति मांसपिण्डं शरीरं केवलं स्वलक्ष्य प्राप्तेः साधनं स्वं व्यापकत्वभिन्नं न भावयति स स्व अहं स्वभावेन परिपूर्णं वस्तुदेशकाल-परिच्छेदातीतं ब्रह्मास्मि इति कथनाधिकारी। योऽहमिदानीं यावद् अविद्यायाः प्रभावेण स्वं संसारिणमभावयं नाहं तादृशः। देहेन्द्रियादीनां संकीर्णदृष्टौ पतित एषां जनन मरणजरादीनां योगीमन्यमानः क्षुद्रः प्राणीनाहम् अविद्याप्रभावेण ब्रह्मतत्त्वाद् यामदीया पृथग्भावना सा केवलं भान्तिरूपा प्रावर्तत्। अद्याहं प्रबुद्ध आत्मतत्त्वं न ये पृथग् इति ज्ञातवानस्मि्।

## अयमात्मा ब्रह्म

आत्मतत्त्वं यद्यपि स्वयं प्रकाशं परं मायामोग्रस्तैर्मानवैरुपेक्षितं कलेशाप कल्पते। अयमिति पदाभिधेयोऽविद्यायोगी जीवोलक्षणयासाधकदृष्टौ नात्मनो भिन्नः कश्चन ब्रह्मनामको निर्मलः पदार्थः। अतः साधक आत्मतत्त्वं यथावद विज्ञायः आह अयं सर्वान्तभूत इन्द्रियप्राणाहंकारदेहादीनामधिष्ठान भूतः साक्षी सर्वेभ्यः पृथक्, आत्मा ब्रह्म इतीदं महावाक्यं जीवब्रह्मणोरेक्तामाह।

## तत्त्वमसि

यं पूर्वं विषयेषु लिप्तशरीरं स्वं मन्यमानस्तेनैव समंप्रियमाणो जायमानश्चांसीत्। स एव श्रवणमननिदिध्यासनानुष्ठानपरोमहावाक्यं यथावद्

ज्ञानु प्रभवति शरीरञ्च स्वात्मनः पृथग भावयति स एवात्र लक्षणावृत्याऽविद्या-भागत्यागेन त्वं पदेन लक्ष्यते यः सृष्टेः पूर्वस्वगतसजातीय विजातीया भेदातीतो नामरूपरहितः पदार्थ आसीत्। सृष्टौ सत्यामपि यः सर्वत्र निर्विकारस्तिष्ठति स एव मायोपाधिः मायाशंत्यागेन भागत्यागलक्षणया शुद्धचेतनरूप ईश्वर-स्तपदेन लक्ष्यते असि इति क्रियापदं तत्त्वमोर्लुप्तामेकतां प्रकाशयति। परमिमं वाक्यार्थं यावद् अधिकारिण एव दृष्टिर्याति। अनधिकारिण इदं रहस्यमुपहसन्त उपेक्ष्यन्ते। परं मुमुक्षवो महावाक्यप्रतिपादितामानन्दमयी जीवब्रह्मणोरेकतामेव स्वकीयं स्थापिधाम भावयन्ति।

तत्त्वमसीति वाक्यस्य महत्वात् प्राधान्यात् आदौ तत् पदशोधक वाक्यानां सत्यं ज्ञानमित्यादीनां परे सापेक्षिप्तमंखंडार्थ बोधकत्वमुपपादनीयम्। परेण हि उच्यते सत्य ज्ञानमित्यात्रापि समानाधिकरण्यस्यानेक विशेषण-विशिष्टैकार्थभिधानव्युत्पत्या न निर्विशेष् ब्रह्मसिद्धिः। प्रवृत्तिनिमित्तभेदेनैकार्थ-वृत्तित्वं सामानाधिकरण्यम्। तत्र सत्याविदपदमुख्यार्थैः गुणैः तत्तद्गुण-विरोध्याकार प्रत्यनीकाकारैर्वैकस्मिन्नेवार्थे पदानां प्रवृत्तौ निमित्त भेदोऽवस्या-श्रयणीयः इत्यादि तदपि न युक्तम्।

निर्विशेष श्रुतिविरोधात्। अद्वितीय श्रुत्या सर्वविधिभेद निराकरणात् सत्यादि पदानां सत्यत्वादिविशिष्टेन तात्पर्यम। यतो वाचो निवर्तन्ते इति श्रुतिविरोधाच्च। न हि कस्यापि गुणास्य सहभावे वाचांनिवर्तनं युक्तम्। न चानन्तगुणसत्वात् वाचा च व्याहर्तुमं शक्यत्वात् यतो वाच इति श्रुतिप्रवृत्तिरिति वाच्यम्। सगुणोब्रह्मणि गुणवर्णनेऽपि वाचः प्रवर्तनात् निवर्तनमयुक्तम्। न च

सर्वगुण वर्णने वाचो निवर्तनमिति आशयो वर्णयितुं युक्तम्। यत्र इति ब्रह्मणो निर्देशात् किञ्च आनन्त्येऽपि गुणानां अनन्तगुणाकरत्व रूपेण शब्दप्रवृत्तौ यतो वाचो निवर्तते इति श्रुतिविरोधः दुष्परिहारः तथा च उपभयलिङ्गत्वाधिकरणां श्रीभाग्यमते च वागप्रवृत्तिर्नास्ति साक्षात् अभिधया ब्रह्मबोधनात्। लक्षण एव बोधनात् न च लक्षणयापि बोधने वाकप्रवृत्तिभवत्येव इति वाच्यम् सत्यत्वादिकल्पितगुणबोधने एव वाचः उपक्षयात् अनुपपत्ति प्रतिसन्धानपूर्वकाखण्डार्थबोधः मानसः शब्दप्रयोज्यत्वाच्च सत्यादि पदप्रतिपाद्य इति व्यवह्रियते किं वासत्यादिपदैः लक्षणायाः असत्यत्वादि व्यावृत्ति मात्रं क्रियते। ब्रह्म तु व्यावृत्याश्रयतया स्वतः सिद्धमिति व्यावृत्ति द्धारोपलक्ष्यते शाखाचन्द्र न्यायेन।

तच्चाखण्डार्थबोधनं शोधकवाक्येन कथमुपपद्यतेति चेतोच्यते।

सत्यादिवाक्यस्याखण्डार्थबोधकत्वाक्षेपः किं तत्वस्यासम्भवात् उत तेन वाक्येन तस्य बोधनाभावात् नाद्यः अखण्डार्थस्य उपपादयिष्यमाणत्वात् न द्वितीय लक्षणाया खण्डार्थपरत्वात् सत्यादीनाम्। तथाहि सत्यं ज्ञानमित्यादीनां सामानाधिकरण्यं प्रतीयते। तत्र भिन्नप्रवृत्तिनिमित्तानां एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। पर्यायप्रयोगे तत्त्वव्यावृत्यर्थभिन्नेति। अर्थशब्दोवस्तुवाची। निर्गुणवादिश्रुतिविरोधात् वस्तूनि कस्यापि धर्मस्याभावावगमात् शब्दप्रवृत्तिनिमित्तानां जात्यादीनां बाधितत्वात् कल्पित सत्यत्वादि धर्ममादायाभिधेयार्थबोधे सति तस्य परमार्थतोऽसम्भवात् उक्तश्रुत्या शुद्धं ब्रह्मलक्ष्यते। इयं च लक्षणा जहद्जहश्री विरुद्ध सत्यत्वादिपरित्यागात् एकरसस्य चितोग्रहणाच्च। न च लक्ष्यमात्रबोधनात् सत्यादीनां पर्यायतापत्तिः। एकस्य वस्तुनो

लक्ष्यपत्वेऽपि सत्यादीनां पदानाम् जाड्यादिविरोधिनिरसेन तत्त्वलक्षकत्वात्। अतएव च न पदान्तरवैयर्थ्यम्। प्रत्येकं वा लक्षणत्वात् न च मानान्तर सिद्धस्यैव लक्ष्यत्वे ब्रह्मणो मानान्तरासिद्धत्वात् लक्ष्यत्वासम्भव इति वाच्यम्। ब्रह्मणो स्वतः प्रकाशस्य मानान्तरा प्रवृतेर्भूषणात्। यद्वा सत्यादिवाक्ये न पदलक्षण अपि गम्भीरायां नाद्या घोषः इतिवद् वाक्य लक्षणोवेति न पदवैयर्थ्यादि दोषः। तदेवं सत्यादिवाक्यं तत्त्वमसीति महावाक्यस्य तत् पदलक्षयार्थस्य समर्पकम् अखण्डार्थ बोधनद्वारा सत्यादिवाक्यमखण्डार्थबोधकं लक्षणवाक्यत्वात् प्रकृष्टप्रकाशः चन्द्र इत्यादि वाक्यवत्। त्वं पद लक्ष्यार्थस्य तु योऽयं विज्ञानमय।[१] प्राणेषु दृष्टान्तज्योतिपुरुषः न दृष्टे दृष्टारं पश्येरित्याद्या श्रुतयः।

तत् वाच्यार्थ समर्पिका यतो वा इमानि[२] भूतानि इत्यादि श्रुतिः। त्वं पद वाच्यार्थ समर्पिका च तद्यथा महामत्स्य उभेभूले अनुसन्चरति पूर्वाञ्चा-परञ्च एवमेवायं पुरुषः एतावुभावन्तावनुसन्चरति स्वप्नान्तं च बुद्धान्तचेति श्रुतिः एवञ्च पदार्थज्ञान पूर्वकत्वात् वाक्यार्थज्ञानस्य तत्त्वमसीति महावाक्य-घटकीभूत तत्त्वं पदयोर्वाच्यार्थवुमुक्तात्मा विशिष्टि जीवब्रह्मणोरुक्त श्रुत्योपस्थितौ जातायां विशिष्टयोवस्तयोरेम्यानुपपत्तौ विरुद्धांश परित्यागेन लक्षणया लक्ष्यार्थ समपर्कवाक्यानुभूतयोः शुद्धयोः लक्ष्यार्थयो स्मरणात् एक्यबोधोपपत्ति सत्यादि-पदैः सत्यत्वादिविशिष्टविषयक शक्त्यनुभवजन्यसंस्कारस्य पदज्ञान सहकृतस्य

---

१. वृ०उप०, ४/३/७.
२. तैत्ति०उप०, ३/१.

तात्पर्यानुरोधेन शुद्ध विषयक स्मृतिहेतुत्वसम्भवात्। न च सत्यादिपदेन अननु-भूतपूर्वस्य शुद्धस्य कथं स्मृतिसम्भवात् इति वाच्यम्। सुषुप्तौ निर्विकल्पक साक्षिचैतन्यानुमवाङ्गीकारात्। सुषुप्तौ तावत् साक्षिस्वरूपा सुखस्वरूपा अज्ञान-स्वरूपाश्चेति निर्विकल्पकः अविद्यावृत्तयः जायन्ते इति विवरणे अङ्गीकृतम्। तत्र साक्षी पदि अविद्योपहितचित् तदापि अविद्याया साक्षिस्वरूपाघटकत्वात् साक्षिणाश्चिद् रूपत्वमेवस्तिं शुद्धचैतन्यं साक्षीतिमते तु चिद्रूपत्वमेव साक्षिणा तथा च सौषुप्तिक निर्विकल्पकानुभवभूतिका सत्यादिपदात् शुद्धस्मृतिरिति।

तथा च तत्त्वमसीति वाक्यखण्डचिन्मात्रबोधकसमानाधिकरण-त्वात् सोऽयं देवदत्त इत्यादि वाक्य इत्यानुमानेन महावाक्यस्याखण्डार्थ-निसृत्वे सिध्यति। न सामानाधिकरण्यस्य नीलो घट इत्यादौ सत्वात् अखण्डार्थत्वस्यासत्त्वात् तादात्म्यसम्बन्धस्य च सत्वात् व्यभिचार इति वाच्यम्। हेतुकोटो अकार्यकारण द्रव्ययात् निष्ठत्वे सतीति विशेषणं देयम् तथा सति। तथा च गणक्रिया द्रव्यरूप कार्याणाम् सामान्य विशेषयोश्चाकार्यस्य तादात्म्य स्वीकारात्। तथा च यत्र जीवत्वेशत्वोपहितयोः तादात्म्यं न सम्भवति तत्रा-खण्डार्थत्वं बाधायां सामानाधिकरण्यस्य यत्तुवेदार्थसंग्रहकृता उक्तम् तत्त्वमिति सामानाधिकरण्येन जीवशरीरस्तथा जीवप्रकारं ब्रह्मैवाभिहितम्। एवमभिहिते सत्यमर्थो ज्ञायते, त्वमिति यः पूर्वं देहाधिष्ठावृतया प्रतीतः सः परमात्म-शरीरतया परमात्मप्रकारभूत परमात्म पृथकस्थिति प्रवृत्त्यनर्हः, अतस्त्वमिति प्रकारविशिष्टम्।

ब्रह्मात्मकत्रयैव जीवस्य शरीरिणः स्वनामभाकत्वात् तत्त्वमिति

समानाधिकरणवृत्योर्द्वयोरपि पद्यो ब्रह्मैव वाच्यम्। तत्र तद् पदं जगतकारणभूतं सकलकल्याणगुणगुणाकारं निरवयं निर्विकारमाचष्टे। त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपं स शरीरजीव प्रकारविशिष्ट्या चष्टेः। तदेवं प्रवृत्तिनिमित्त भेदेन कस्मिन् ब्रह्मण्येव तत्त्वमिति द्वयोः पदयोःवृत्तिरुक्वेति।

अस्य सन्दर्भस्यायमभिप्रायः तत्त्वमित्यत्र न लक्षणा। अभिधयैव उभयोः पदयोः ब्रह्मणो बोधः। प्रवृत्तिनिमित्तभेदात् च एकस्मिन् द्वयोः प्रवृत्तिः। त्वमिति जीवान्तर्यामिवाचकं तत् इति जगतकारणं सगुणं ब्रह्मेति। अनेन वाक्येन जीवस्य देहाधिष्ठावृत्त्वनिवृत्तिः ब्रह्मप्रकारवगमश्चेति।

अत्रोच्यते नैतत् युक्तम् सदैव सौम्येत्यादिना उपक्रम्पतत्त्व-मसीत्यादिनोषसंहारात्। उपक्रमादिना तस्य प्रद्यद्वकस्याद्वैते निर्दिशेतात्पर्याव-धारणात्।

सद शब्दार्थस्य एकमेवाद्वितीयमित्यादिना लक्षणयुक्त्वा तस्यैव जगतकारणत्वं प्रतिपाद्यपुरस्थितं श्वेतकेतुमुद्दिश्य त्वं तदेवासीति श्रुत्या बोध्यते। अर्थात् तदेव सतत्वमसीति न सदतिरिक्तः भिन्नो वेति तात्पर्यात्। तत्रैव सतित्व पदस्य ब्रह्मैव वाच्यं जीवप्रकारमिति कथनमनुपयुक्तम्। अप्रसिद्धेः यदि त्वं पदेनापि जीवप्रकारं ब्रह्मैव वाच्यं स्यात् तदाकृतं तत् पदेन। त्वमसी-त्येता तत्रैव विवक्षितार्थसिद्धेः। जीवं ब्रह्मणा शरीरं प्रकारो वास्ति त्वं श्वेतकेतु ब्रह्मणः शरीरमस्ति प्रकारो वास्ति इत्यर्थात। किञ्च त्वं पदनं जीवस्यैव प्रकृतत्वात् बोधनात् तदन्तयामि बोधे सकृयन्तरापेतेः। यदभावाच्च तदबोधात्। त्वं पदशक्त्या देहादि विशिष्टस्यैव बोधनोपक्षयात्। लक्षणा याश्चास्वीकारात्।

अन्तर्यामिणाश्च ब्रह्मणो वस्तुतः जीवस्वरूपा विशेषात्। एवञ्चत्वं पदेन कथञ्चिदपि जीवान्तर्यामिबोधनं न सम्भवति। तत् पदेनापि सदैव सजातीपादि भेदशून्यं प्रतीयते न तु सविशेषं ब्रह्म अभिधीयेतापि तथापि त्वं पदेन चेकार्थाभिधेन घटः कलशः इत्यादिवत् मन्दिरं गृहमित्यादिवत पर्यायता स्यात्। न च प्रवृत्तिनिमित्त भेदात् एकार्थेऽपि प्रवृत्तिरिति तथा च घटते इति घटः कलैसहितोवेति प्रवृत्तिनिमित्त भेदात् घटकलशादावपि अपर्यापता स्यात्। यदि च घटः कः इति जिज्ञासायां कलशोघटः इति प्रयोगे भवत्येव सम्प्रयय: घटस्य तथैव त्वं कः इति जिज्ञासायां तत् इति बोधः चेत एवमपि त्वं पदेन जीवप्रकारं ब्रेह्मीति अभिधयालाभात्। व्यवहारस्यैव शक्ति नियामकत्वात्। न चानेनेति श्रुति जीवप्रकारस्य प्रमापिकेतिवाच्यम्।

तस्याः श्रुतेरन्यार्थत्वात् न च कल्पितातिरिक्तः कश्चित् ब्रह्मणो व्यतिरेकेण जीवः तदन्तर्यामी वा श्रुतिसिद्धः। सदैव तु नामरूपाभ्यां उपहित जीव इति व्यवह्रियते। अतः त्वं पदेन तदन्तर्थामि बोधने नास्ति शक्तिः। जीव बोधने च कल्याणागुणनिधिवाचकेन वत् पदेन सह सामानाधिकरण्या सम्भवात् बाधात्। न च बाधा यामेव सामानाधिकरण्यं सम्मतं भवताम्। निर्गुण श्रुते अनिरोधात् अद्वैतश्रुति अनिरोधात् त्वं पदेन तत पदेन च प्रकृतार्थ एव गृहीतव्य तथा च विरोधात् लक्षणाश्रयसीपैव। साचैकत्वस्य तात्त्वर्थं सिद्धस्य बोधनात् न दोषः।

न च शरीरवाचकः शब्दः सात्मनः तस्य वाचकोभवतीति त्वमिति-पदं जीवशरीरस्यात्मनो ऽन्तर्यामिणो वाचकमिति वाच्यम्। जीव ब्रह्मणो

शरीरशारीरिभावस्यासिद्धत्वात्। यस्यात्मा शरीरमित्यादावति आत्माशब्देन सात्मनः शरीरस्य वाचकत्वात् अन्तर्यामिनोऽपि शरीरत्वापत्तेः। अथ तत्र लक्षणया आत्मा जीव एव न तदन्तयामी तथैदेवापि त्वमिति जीवएव न तदन्तर्यामी वैषम्ये बीजाभावात्। अथ समानाधिकरण्यानरोघात् इहान्तर्यामि-पर्यन्तस्यार्थस्य ग्रहणमिति चेन्न सामानाधिकरण्यस्ये करणत्वप्रतिपादनेऽ-व्युपपत्ते किञ्चतत् पदेन ब्रह्मणो वाच्यत्वे न तत्र वाग्वाच्छतीत्यादि श्रुतेः विरोधः।

न च तस्य त्वं तत्त्वमिति समस्तमेवेतिशेषशेषिभाव एवं षष्ठ्यर्थः तस्य सविशेषस्य ब्रह्मणः त्वं जीवोऽयं इति भावः इति वाच्यम् त्वं पदवाच्यार्थ विरोधात्। त्वं पदेन जीवान्तर्यामिग्रहरेण षष्ठ्यर्थोऽनुपपन्नः। जीवमात्रग्रहणे च असमासपक्षे दोषः आचार्य वचनविरोधश्च आचार्येण त्वं पदेन जीवान्तर्यामिग्रहणात्। समासपक्षे च सम्बन्धविशेषस्य निर्धारणे प्रमाणा भावात् अध्यासिक सम्बन्धेनापि षष्ठी राहो शिरे इति उत्पन्नेति न समाहित-सिद्धिः तस्मात् न कथञ्चिदपि सविशेषवादि सम्मत महावाक्यार्थः सम्भवति।

एवञ्च सोऽयं देवदत्तः इत्यादौ तत्कालैतर कालयोः विरुद्धांशो परित्यागात् केवल देवदत्तमात्रं प्रत्यभिज्ञायते तथैव प्रकृतेऽपि जीवत्वेशत्वांश-परित्यागात् शुद्ध चिन्मात्रं बोध्यते। उक्तचेतत् आह च तन्मात्रमिति वैयासिकेन सूत्रेण। तस्मात् तत्त्वमसीति महावाक्यस्य न शरीरशरीरिभावेनाद्वैते द्वैते वा तात्पर्यमपितु लक्षणया जीवत्वेशत्वादिरूपांशस्य परित्यागात् अखण्डे एकरसे चिन्मात्रे तात्पर्यमिति अनवद्यम्। तात्पर्यञ्च प्रतीयमार्थप्रमिति जनसामर्थ तच्च

शब्दधर्म इति तदेव मुख्यम्। तात्पर्यार्थ एव वाम्पस्योपक्रमोपसंहारेकरूपम्। तस्यैव पौनः पुन्येनाम्यासः तत्रैव फलसंकीर्तनम् अपूर्वता, अर्थवादोपादन-मुपपादन नश्चेति तदेव वाक्यर्थः। तत्वमीत्यादौ तु अखण्डैकरसे उपक्रमादीनां लिङ्गानां तात्पर्याधापकत्वमुपपादितमेव एवं तत्त्वमसीत्यादि वाक्यानामखण्डे-निर्विशषे ब्रह्मणि तात्पर्यम्।

**लक्ष्यार्थनिरूपणम् –**

सर्वज्ञत्वाल्पज्ञत्वविशिष्टार्थप्रतिपादकत्वंपदयोरभेदान्वयबोधा प्रसक्त्या जहदजलक्षणावृत्या चैतन्यमात्रार्थबोधादन्वयः सम्भवति। तस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसंधानस्यैव लक्षणबीजत्वात् सदेव सोम्येदमग्र आसीदेक-मेवा द्वितीयं तदैक्षत् बहुस्यां प्रजायेयेति श्रुतिभ्यां तत्पदस्य सर्वज्ञत्वादि-विशिष्टार्थबोधकतया जीवनात्मनानुप्रविश्य नामरूपे व्याकरवाणि श्रुत्वाऽन्तः करणा वच्छिन्नधिदरूपत्वाल्पज्ञत्वादि रूपार्थबोधकतया तत्त्वमसि, इत्यत्रहि चैतन्यमात्रतात्पर्येणोच्चरितमोस्तत्त्वं पदयोस्तात्पर्यानुपपत्विप्रतिसन्धान-विधिना लक्षणाबीज संवर्धनेविशेषांशपरित्यागेन तत्वपदयोश्चैतन्यमात्रर्थो-ऽवगम्यते। ततश्च विशेष्यद्वयाभेदगोचरशाब्दबोधः। वाक्यजन्याज्ञानस्य स्वविषयचैतन्ये न सह यः स्वरूपसम्बन्धविशेषः सामग्रीविशेषाधीनत्व प्रयुक्तः तेन सम्बन्धेन चैतन्यगोचरत्वं घटज्ञानादिव्यावृत्तम्। तदेव तस्याभेद-ज्ञानत्वम् तद्बलादेव तयमूलाज्ञानमिथ्याज्ञानादिविरोधित्वम्। तदुक्तम् [१]"तत्वं

---

१. सिद्धान्तलेशसंग्रह।

पदवाच्यार्थधीर्मद्वयपरामर्शादिरूपकारणविशेषधीनेन स्वरूपसम्बन्धीविशेषेण चैतन्यविषयत्वमेवतदभेदज्ञानत्वम्।''

न च विशेषणविभक्त्यर्थे तत्प्रकृत्यर्थस्य विशेषणतयाऽन्वय सम्भवेऽपि विशेष्यपदार्थस्य तत्रविशेषणत्वेनान्वयोऽव्युत्पन्न इति वाच्यम प्रकृतवाक्यस्थले विशेषणविशेष्यपदार्थयोर्भेदबुद्धि विरोधिशब्दबोधस्य सर्वसिद्धत्वात्। तयोश्च सर्वज्ञत्वाल्पज्ञत्वाभ्यां विशिष्टे वाक्येऽखण्डार्थ बोधाप्रसक्तेः गरीयायां नद्यांघोष इति वाक्य एव जहदजहल्लक्षणावृत्या सर्वज्ञत्वाल्पज्ञवरूपार्थपरित्यागेन चैतन्ममात्रप्रत्ययाद्भवति भेदहीनोऽखण्डार्थ-शब्दबोधः तथा चोक्तम् —

सोऽयं पुमानयमसाविति पौरुषेये वाक्ये तथाव्यवतिह्नतेऽत्र विशेषहेतुः। पूर्वापरत्वमिति शक्यमिदं न वक्तुं मुख्यत्वः लाक्षणिकते प्रतिशब्दवृत्योः।[१]

## अखण्डार्थबोधस्यफलनिरूपणम् –

भेदात्मकज्ञानभ्रान्तजानानां कर्तव्याकर्तव्यज्ञानशून्यानां मुह्रद-भूत्वा श्रुतिराह "आत्मनो वा अरे दर्शनेनमत्या विज्ञानेनेदं सर्व विदितम्।"[२] तदर्थं प्रतिपत्तिवेदान्तशास्त्रस्य। अतएव प्रथम एव सूत्रे बादरायणं ब्रह्मजिज्ञा-सेत्यवोचत्। तच्च ब्रह्म विशिष्टं निर्विशिष्टं वेति जिज्ञासायां "ब्रह्मविद्याप्नोति

---

१. संक्षेपशारीरके – १/१६५.
२. बृ०उप० २/४/५.

परम्''१ ''तमेवविदित्वा मृत्युमेति नान्यः पन्थाविद्यतेऽयनाय'' इति श्रुतिभ्यां बाधितनिर्विकल्पकज्ञानस्यैव मोक्षहेतुत्वात् शुद्धब्रह्म जिज्ञास्यमितिनिश्चीयते। विकल्पस्य जीवात्मयरमात्मनोभेदात्मकज्ञानेन जायमानत्वात्तन्निवृत्यैव निवर्तते। अतस्तत्वं पदार्थमात्रानुभवात् तत्त्वं पदलक्ष्यार्थज्ञाद्धा न कृतकृत्यता न च समूलाविद्यानिवृत्तिः अपि च तयोरभेदात्मज्ञानादेव भवति।

अविद्यायाः सकलप्रपञ्चजननेनार्थमूलकतया तन्निवृत्तिरेव फलं तत्त्वं पदयोरखण्डार्थबोधस्य। सा चा विद्यानैकजीववादे प्रतिजीवं भिन्नेति कल्प्यते। अवच्छेदवादे तत्तदन्तः करणावच्छेदेन जींवानामनन्त्यात् कस्यचिद्धिबोदये तदविद्याकृताल्पज्ञत्वादि व्यपगतेऽपि बद्धपुंसषान्तराविद्याकृते जीवेश्वरविभागादि प्रपञ्चोऽनुवर्तते। एकजीववादे हि कृत्स्नस्य जीवेश्वरादिविभागस्यैकेनाज्ञानेन जन्यतपातद्विघोदये विलयान्निर्विशेष चैतन्यरूपेणैवावस्थानम्। तत्र प्रथमपक्षेऽपि प्रतिबिम्बवादमाश्रित्य सर्वसम्भवात्। जीवइवेश्वरोऽपि प्रतिबिम्बविशेषः, इति पक्षेमुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम् ''सर्वखल्विदं ब्रह्म''२ ''नेह नानास्तिकिञ्चन''३ इति श्रुतेः। आत्यन्तिकदुःखनिवृत्तिर्न भवति तत्वज्ञानमन्तरा। तच्च प्रतिपद्यते तत्वमस्यादिमहावाक्यानामखण्डार्थज्ञानेन। ततत्वं पदयोश्च भिन्नार्थप्रतिपादकतया न सम्भवति। अखण्डार्थतेति धिया तत् त्वं पदयो- र्जहदजहल्लक्षणावृत्याऽल्पज्ञत्वसर्वज्ञत्वां शपरित्यागेननिश्चयोयतेऽद्वैतस्यता।

---

१. श्वेताश्वतरोपनिषद् ६/१/५.
२. छा०उप० ३/१४/१.
३. बृ०उप० २/४/५.

जीवात्मपरमात्मनोरभेदात्मकं ज्ञानमेव सर्वशास्त्राणां फलम्। तेनैवनिबर्त्यतेऽविद्याजन्यसकलबन्धेहेतुभूतं जगत्।

तत्वमस्यादिमहावाक्यबोधेनछिन्ने द्वैतेऽद्वयज्ञानरूपंचिन्निश्चीयते। तन्निश्चयं एवात्मबोधः। तद्बोधेहि पूर्व तदाकारवृत्तिसदेति तच्च सविकल्पंक ज्ञानमुच्यते, तदनन्तरंलीनायां वृत्तावखण्डात्मबोध निश्चयः। तदर्थहि शास्त्राणामुपयोगः, निखिलोपनिषदां केवलाद्वैत एव तात्पर्यम्। एवं वैष्णवप्रिये पुराणमूर्धन्ये निगमकल्पतरूपलितपलोपमे श्रीमद्भागवते प्रथमे "वदन्ति तत्तत्वविदस्तत्वं यज्ज्ञानमद्वयम्"[१] इत्यनेन केवलमद्वयब्रह्मज्ञानमेव समस्तशास्त्रप्रतिपाद्यं सारभूतं सत्यतत्वं तदितरत द्वयज्ञानमसारं तुच्छम्। तथा चोक्तं चतुर्थे अहं भवान्न चान्यस्त्वं त्वमेवाहं विपक्ष्वभोः।[२] इत्यनेन व्यतिहारोपदेशेन पारमार्थिकं जीवब्रह्मणोरैक्यं दशमेपूवर्धि च "तस्यादिदं जगदशेषमसत्स्वरूपं स्वप्नाभम्।"[३] इत्यनेन ब्रह्मभिन्नस्य सर्वस्यद्वैतप्रपञ्चस्य मिथ्यात्वञ्च स्पष्टं प्रतिपादयन एकादशे च "सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः। भूतानि भवक्त्यात्यन्येष भगवतोत्तमः। उपसंहारात्मकं द्वादशेऽपि "सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम्। यस्तु अद्वितीयं तन्निष्ठं कैवल्यैक प्रयोजनम्।"[४] तच्च ज्ञानरूपं "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था

---

१. श्रीमद्भा० – १/२/११.

२. तदेव – ४/२६/६३.

३. श्रीमद्भा० – १०/१४/२२.

४. श्रीमद्भा० – १३/१३/१२.

विद्यतेऽथनाय।[१] ज्ञात्वा देवं सर्वपाशंपहानिः।[२] "तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति"[३] इति श्रुतयः सर्वज्ञानप्लवै दृजिनं संतरिष्यति।"[४] "नहि ज्ञानेन[५] सदृशंपवित्रमिह विद्यधतेज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन"[६] इति स्मृतयश्च ज्ञानमेव मोक्षत्वेनानुमोदयन्ति। ज्ञानादेव तु कैवल्यम् श्रुते ज्ञानान्न मुक्तिः। तच्च न सम्भवति मिथ्या ज्ञाननिवृत्तिमन्तरेण अतः पूर्व द्वैतामिथ्यात्व-मेवोक्तं तत्श्चाद्वैत निश्चयः।

**द्वैतमिथ्यात्वबोधने वीयतेतत्ववेदनम्।**
**अविद्याजायते द्वैतं ततो बुद्धिर्विनश्यति॥**



१. उ०प० ६/१५.
२. श्वेता० १/११.
३. तदेव ६/२०.
४. गीता – ४/३६.
५. गीता – ४/३६.
६. गीता – ४/३८.

# उपसंहारः

उपसंहारो नाम शोधप्रबन्धेषु सारांशकथनम्। मया निवन्धिते शोधप्रबन्धे सम्यग्विषयनिरूपणाय ते ते विषयाः विच्छिद्य अष्टाध्यायेषु निरूपिताः सन्ति। तत्रैवविचार्यते यदास्ति किं जीवनस्य स्वारस्यम्। एतत्प्रसङ्ग एव नीति कारैरुक्तम् —

**धमार्थकाममोक्षेषु यस्यैकोऽपि न विद्यते।**

**अजागत्रस्तनस्यैव तस्य जन्म निरर्थकम्।।** इति।

एतेन यज्जीवने पुरुषार्थप्रधाने एकोऽपि पुरुषार्थः यदि सिद्धो न स्यात्तर्हि तस्य जनस्य जन्म अजागत्नस्तन इव भारभूतं नैरर्थ्य भजते। इति तत्वं विचिन्तयन्तो परिवारसंस्कारवशाच्चाध्यात्मेविषये रुचिः सत्त्वात् गुरु-कृपातः यदाहं गवेषणाय प्रवृत्ता अभवन तदा चिन्तितं मया यत् "आम्राश्च सिक्ताः पितरश्च तृप्ताः" इति न्यायवत् तदेव विषयमादाय गवेषितव्य येन ज्ञानवृद्धयैव सहमय शोधकार्यमपि सम्पूर्तिमीयादिति। अतः एवंभावेन प्रार्थितेन मया करुणापन्नैगुरुभिः मम भावं विज्ञाय वेदान्तसारस्य विद्वन्मनोरञ्जनी-टीकायाः समीक्षणम्" इति शोधप्रबन्धविषयः अस्मैप्रदत्त इति।

वेदान्तिनान्तु जीवेशावाभासेन करोति, भाषा च विद्या च स्वयमेव

भवतीति[१] श्रुत्यनुसारेण मायाशक्त्युपहितस्यैश्वरस्य जगत् स्रष्टत्वम् मायया च जगत सर्वे सर्वा अपि अनुपपत्तयः परिहृताः भवन्ति। तदेवोक्तम् —

**किमीहः किं कायः सखलु किमुपार्यस्त्रिभुवनम्।**
**किमा धारो धाता सृजति किमुपादान इति च ।।**
**अतर्क्यैश्वर्ये त्वप्यनवसरदुःस्थो हतधियः।**
**कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ।।**[२]

वेदान्तिमते भगवति जगनियन्तिरि सर्गफलं लीलामात्रमेव तथा च पारमर्थ सूत्रम् — 'लीकवत्तु लीलाकैवल्यमिति।'[३]

**गौडपादाश्चेतत्थमाहुः –**

देवस्यैव स्वभावोयमाप्तकामस्य का स्पृहा।[४] इति अद्वैतिनामेयां मते ईश्वरीमयिक; सृष्टिरपि मायिकी, भोगापवर्गफलं स्रष्टव्येषु।

**एतन्मतेमोक्षस्वरूपम् –**

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः। इति श्लोकोक्तलक्षण-लक्षितः सच्चिदानन्दात्मरूपः मोक्षः एतेषां सम्मतः।[५]

अद्वैतवादः प्रमाणादीनि व्यवहारकाणि, परमार्थतः सत्यं ब्रह्मैव।

---

१. नृसिंहोत्तरतापनीयोपनिषद्, ९/२.
२. महिम्न स्तोत्रम्, श्लोक ५.
३. ब्र०सू०, २/१३३.
४. मा०का, १/९.
५. अद्वैतसिद्धो गौड ब्रह्मानन्दन्दयामुद्धृतः।

प्रमाणानां तेषां प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्ध्य इति षट्त्वमभ्युपगम्यते।

(क) प्रस्थानत्रयं प्रमाणम्।

(ख) शब्दप्रमाणस्यैवान्यप्रमाणापेक्षया श्रेष्ठम्।

जगदन्तः पातित्वाद्वेदानामपि न पारमार्थिकत्वम्। प्रमेयं ब्रह्मैव निर्गुणं निराकारं ब्रह्म। आनन्दमयो न ब्रह्म किन्तु ततः परं ब्रह्म अन्यदेव। सगुण-निर्गुणति कल्पना परापरेति विद्या द्वैविध्यञ्चस्वीक्रियते। परमार्थतोऽकर्तृभूतं ब्रह्मैव मायावशात् कर्तृत्वेन प्रतीयते। जगतोऽसत्यत्वाद ब्रह्मणानन्यत्वं न सम्भवति। अविद्यावशाद् ब्रह्मैवजीव रूपेणभासते। विद्ययाऽविद्यानिवृत्तौजीवत्वनाशः। जीवो विभुर्बुद्धिसंयोगाद् पुरुपेण भासते। जीवस्य कर्तृत्वभोक्तृत्वादिकं बुद्धिसम्बन्धजं न पारमार्थिकम् जीवःप्रतिबिम्बभूत आभासः।

ब्रह्ममाययानैकजीववादभासते जहदजहल्लक्षयाऽभेदसिद्धिः। जगदसत्यमविद्ययाभासते च द्वैतज्ञानमविद्याकार्यम् जगत्संसारयोर्भेदो नाभिमतः। विवर्तवादः। अध्यारोपापवादौ अनिवर्चनीयख्यातिः। कर्मोपासना ज्ञानमिति साधनक्रमः। भक्त्युपासनयोर्भेदो नाभिमतः कर्मादीनि साधनानि जगदन्तः पातित्वादपारमार्थिकानि। अविद्यानिवृत्तिरूपोमोक्षः केवल्यमित्यभिधीयते। अविद्यामायाङ्गीकारेणाद्वैतं प्रतिपाद्यते। सर्वमलीकमिति मत्वाऽद्वैतं साध्यते तत्तच्छतिव्यवस्थार्थ निर्गुण सगुणोपजीव्यत्वोपास्यत्वपरब्रह्मत्वादिकल्पनम् तदवधेयम्।

शोधप्रबन्धेऽस्मिन् भूमिकायातिरिक्तं प्रथमेऽध्याये वेदान्ततत्त्वस्य सम्यक् निरूपणं विद्यते। द्वितीयेऽध्याये अद्वैतवेदान्तस्य सर्वश्रेष्ठत्वनिरूपणं कृताऽस्ति। तृतीयेऽध्याये तु वेदान्तसारस्य पदार्थानाम सम्यक्तया दिग्दर्शनम् प्रस्तुतोस्ति। चतुर्थेऽध्याये वेदान्तसारस्य विद्वन्मनोरञ्जिनी टीकाया: समीक्षणं तथा पञ्चमेऽध्याये तदग्रन्थाधारे अनुबन्धचतुष्टयस्य सम्यकतया विवेचनम् कृत्वा षष्ठेऽध्याये तु पञ्चीकरणप्रक्रियायां ग्रन्थकारस्य दृष्ट्या विवेचनम् प्रस्तुतोऽस्ति। सप्तमेऽध्याये वेदान्तमते मोक्षस्वरूपस्य वर्णनं कृत्वा अष्टमेऽध्याये अद्वैतमतानुसारेण तत्त्वमसिमहावाक्यार्थ विषये विभिन्न ग्रन्थानां साहाय्यं गृहीत्वा तं निष्कर्षं प्रस्तुतोऽस्ति। अन्ते च अस्य शोधप्रबन्धस्य सारं उपसंहार रूपेण प्रतिपादितोऽस्ति।



# सन्दर्भग्रन्थसूची

१. अद्वैतसिद्धिः, अनन्तकृष्णशास्त्रि, परिमल पब्लिकेशन्स, दिल्ली, १९८२.

२. अमरकोश, निर्णयसागर मुद्रणालय, मुम्बई-२.

३. ईशादि उपनिषद् भाष्यम्, एस० सुब्रह्मण्यशास्त्रि, महेशानुसंधान संस्थान, १९७९.

४. खण्डनखण्डखाद्य, स्वामी योगीन्द्रानन्द जी, षड्दर्शन प्रकाशन, प्रतिष्ठान, उदासीन संस्कृत महाविद्यालय, वाराणसी, १९७९.

५. चित्सुखी, स्वामी योगीन्द्रानन्द जी, षड्दर्शन प्रकाशन, प्रतिष्ठान, उदासीन संस्कृत महाविद्यालय, वाराणसी, १९८५.

६. छान्दोग्योपनिषद्, उपनिषद्भाष्यम् भाग-२, एस० सुब्रह्ममण्यशास्त्रि, महेशानुसंधान संस्थान, वाराणसी।

७. तर्कसंग्रहः, श्रीकृष्णनिबन्धभवनम्, वाराणसी, १९७६.

८. तर्कसंग्रह (भास्करोदय) अनन्तशास्त्रि, पाण्डुरंग नावाजी, निर्णयसागर मुद्रणालय, मुम्बई, १९२६.

९. तैत्तिरीय महाभाष्य।

१०. तत्वविवेकः, आनन्दतीर्थ, संवत् ११८०.

११. दर्शनस्येतिहासः, ज्वालाप्रसाद गौड, चौखम्भा सुरभारती प्रकाशन, १९६७.

१२. दक्षिणामूर्तिस्तोत्रम्, वेदान्तसन्दर्भः, महेशानुसंधान संस्थान, १९८९.

१३. न्यायसूत्रभाष्यम्, वात्स्यायन, चौखम्भा संस्कृत सीरीज, वाराणसी।

१४. न्यायमञ्जरी, गौतम, मोतीलाल बनारसीदास, वाराणसी ६६०।

१५. न्यायकुसुमाञ्जलि, उदयनाचार्य, ९८४.

१६. वेदान्तसारः, रमाशंकरत्रिपाठि, चौखम्भा संस्कृत संस्थान, वाराणसी, १९८३.

१७. बृहदारण्यकोपनिषद् भाष्यम्, आनन्दाश्रम।

१८. तैत्तिरीयोपनिषद् भाष्यम्, आनन्दाश्रम।

१९. छान्दोग्योपनिषद् भाष्यम्, आनन्दाश्रम।

२०. वेदान्तकल्पलतिका पं० रामयज्ञ पाण्डेय, सं०सं०वि०वि०, वाराणसी, १९१८.

२१. पञ्चदशी, वासुदेव लक्ष्मणशांकर निर्णयसागर प्रेस, बम्बई, १९२६.

२२. पञ्चपादिका, पद्मपादाचार्य, अच्युतग्रन्थालय, वाराणसी।

२३. ब्रह्माण्डपुराणम्।

२४. भगवद्गीताशांकरभाष्यम्, मधुसूदनसहितम् अनन्तकृष्णशास्त्री, चौखम्भा विद्याभवनम्, वाराणसी।

२५. महाभाष्यम्, युधिष्ठिरमीमांसक, चौखम्भा विद्या भवन, वाराणसी, १९६७.

२६. किरणावलि (मुक्तावलि) कृष्णवल्लभाचार्य, चौखम्भा संस्कृत संस्थान, वाराणसी, संवत् २०३९.

२७. लघुवार्तिक।

२८. वेदान्तकौस्तुभम्।

२९. वेदान्तचिन्तामणि, शुद्धानन्दसरस्वती।

३०. वेदान्तकल्पतरू।

३१. शिवमहिम्न, मधुसूदन सरस्वती, आनन्दाश्रम।

३२. श्वेताश्वतरोपनिषद्, सन्यासीसंस्कृत महाविद्यालय, वाराणसी।

३३. अद्वैतरक्षणम्, श्री अप्पयदीक्षित।

३४. ब्रह्मसूत्रभाष्य, स्वामीसत्यानन्दसरस्वती, गोविन्दमठ, टेढ़ीनीम, वाराणसी।

३५. मनुस्मृति, नारायणाचार्य, सत्यभामाबाई, पाण्डुरंग, निर्णयसागर प्रेस, मुम्बई, १९४६.

३६. वेदान्तपरिभाषा, श्रीमदमरदास, खेमराज श्रीकृष्णदास वें० प्रेस, मुम्बई, १९८५.

३७. शतदूषणी, वेदान्तदेशिक, शिवप्रसादद्विवेदी, तत्वमुक्ताकलापसंघ, अयोध्या फैजाबाद, १९८४.

३८. सर्वदर्शनसंग्रहः, डॉ० उमाशंकर शर्मा, चौखम्भा विद्या भवन, वाराणसी।

३९. श्रीमद्भागवद्गीतारहस्य, कर्मयोगशास्त्रं, जयन्तश्रीधरतिलक, नारायणपेट, तिलक मंदिर, पूना, १९६२.

४०. ब्रह्मसूत्रभाष्य, भामती कल्पतरू, श्रीअनन्तकृष्णशास्त्रि, १९८२, चौखम्भा संस्कृत सीरीज, वाराणसी।



